

पुराणकथावली २७



उभौ मयूरौ (वेतालकथा) १९



मायासरोवरः १३



विघ्नेश्वरः ४५

# अन्तरङ्गम्





**ग्राहकशुल्कम् -**
अमेरिका-कैनडादेशयोः कृते
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -
**Subscription Division**
**CHANDAMAMA INDIA LIMITED**
No. 82, Defence Officers Colony,
Ekkatuthangal, CHENNAI - 600 097
E.mail : subscription@chandamama.org

**उपायनीक्रियताम्**
वायुयानेन भारतेतरदेशान् प्रति
**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**
**भारते रू. १२०/- (बुक्पोस्ट् द्वारा)**
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।



संस्थापकौ -
चक्रपाणिः नागिरेड्डी च

# सुदीर्घशान्तेः रहस्यम्

शान्तिः प्राप्तव्या इति तु सर्वदा अपि मानवसमुदायस्य स्वप्नः । काले काले जननायकाः तन्निमित्तं प्रयत्नं कृतवन्तः अपि । एषियाखण्डस्य प्रमुखदेशयोः भारतचीनयोः मध्ये कश्चन सन्धिः जातः आसीत् पञ्चाशतः वर्षेभ्यः पूर्वम् उत्तमप्रतिवेशिभिः भवितव्यम् इति उद्देशेन । भारतस्य प्रधानमन्त्रिणः श्रीमतः जवहरलालनेहरूमहाभागस्य आह्वानम् अङ्गीकृत्य चीनादेशस्य प्रधानमन्त्री चौ-एन्-लेमहोदयः १९५४ तमे वर्षे भारतम् आगतः आसीत् । सहस्रशः जनाः तस्य दर्शनार्थं सम्मिलिताः आसन् । सर्वत्र घोषणवाक्यं श्रूयते स्म - 'भारतं चीना च सहोदरौ' (हिन्दी चीनि भाई भाई ) इति ।

भारतचीनादेशाभ्यां कश्चन प्रस्तावः अङ्गीकृतः आसीत्, यश्च *'पञ्चशीलतत्त्वम्'* इति (शान्तियुतसहजीवनाय पञ्च सूत्राणि इति वा) प्रसिद्धः अस्ति । उभयोः देशयोः मध्ये कदापि शत्रुभावना न भवेत् इति आसीत् पञ्चशीलप्रस्तावस्य मूलभूतः आशयः ।

मासत्रयानन्तरं नेहरूमहाशयेन चीनादेशः गतः । आदरपूर्वकं स्वागतं प्राप्तं तेन । द्विसहस्रवर्षेभ्यः पूर्व प्रथमे क्रिस्तशके एव द्वौ बौद्धगुरू कश्यपमातङ्गौ, धर्मरक्षणाय चीनादेशं गतवन्तौ आस्ताम् । तदनन्तरं बहवः चीनादेशस्य विद्वांसः भारतम् अपि आगतवन्तः आसन् । एतत्कारणतः उभयोः देशयोः स्नेहः प्रवृद्धः ।

आश्चर्यं नाम १९६२ तमे वर्षे विना कारणं चीनादेशीयाः भारतसैन्यस्य उपरि आक्रमणं कृतवन्तः । परन्तु अचिरात् एव युद्धविरामः घोषितः ।

चीनाभारतयोः मध्ये पुनः स्नेहसम्बन्धः दृश्यते इदानीम् । अस्माकं प्रधानमन्त्रिणा अटलबिहारिवाजपेयिमहोदयेन कृतं सद्यःकालीनं चीनासन्दर्शनं भव्यभविष्यस्य स्वप्नं सर्वेषु उत्पादितवत् अस्ति । एषः सदाशयः सफलतां यातु इति आशास्महे वयम् ।

**Visit us at : http://www.chandamama.org**

सम्पादकः - विश्वम्

भारतनायकस्पर्धायां भागम् ऊढ्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि

# भारतीयाः नायकाः-२३

अत्र राष्ट्रियान्दोलनम् अधिकृत्य केचन प्रश्नाः उल्लिखिताः । किम् उत्तराणि वक्तुं शक्नुयुः भवन्तः ?

**समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन**



1. अहं १९२० तमवर्षतः १९४७ तमवर्षाभ्यन्तरे दश वर्षाणि यावत् कारागारे आसम् । भारतस्य प्रथमः प्रधानमन्त्री अपि आसम् । मम नाम किम् ?

......................................................................

2. मया 'अभिनवभारतम्' इत्येषा अन्ताराष्ट्रिया संस्था संस्थापिता । स्वातन्त्र्ययोद्धा अहं प्रथमस्वातन्त्र्यसङ्ग्रामस्य इतिहासं मराठी-भाषया लिखितवान् । किं भवन्तः मम नाम जानन्ति ?

......................................................................

3. भारतस्य 'अयोमयः पुरुषः' इति ख्यातः अहं कः इति किं भवन्तः जानन्ति ?

......................................................................

4. १९१२ तमे वर्षे लार्ड् हर्डिङ्गस्य यात्रावसरे यत् विस्फोटनं जातं तस्य उत्तरदायी आसम् अहम् एव । अहं भारतीयराष्ट्रियसैन्यस्य निकटवर्ती अपि आसम् । अहं कः ?

......................................................................

5. १९३०तमे वर्षे बिहारराज्ये प्रवृत्तस्य लवणसत्याग्रहस्य नायकत्वं निरूढम् आसीत् मया । अहं स्वतन्त्रभारतस्य प्रथमः राष्ट्राध्यक्षः अपि आसम् । मम नाम किम् ?

......................................................................

प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । मम प्रियतमः नायकः ..............................

..............................

..............................

..............................

भागग्रहीतुः नाम ..............................

वयः .................. कक्ष्या ..................

सङ्केतः ..............................

..............................

..............................

पिन् .................. दूरवाणी ..................

एतं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय -

**भारतनायकस्पर्धा-२३**
चन्दमामा इण्डिया लिमिटेड्,
८२, डिफेन्स् आफीसर्स् कालोनी
एक्काट्टुतङ्गल्, चेन्नै - ६०० ०९७

उत्तरप्रेषणाय अन्तिमदिनाङ्कः - **५,सप्टम्बर्, २००३**

***नियमाः -***

१. अधिकाष्ट-ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।

*भवद्भ्यः पारितोषिकं ददाति*



# Junior
CHANDAMAMA

**RESERVE YOUR COPY NOW!**



Do you want your children to sharpen their faculties by working on puzzles?
**Come to Junior Chandamama for loads of puzzles and games.**



Are you looking out for interesting new stories to be read out to the kiddies?
**Pick up a copy of Junior Chandamama, and you'll find them there.**

## SPECIAL OFFER

With every one year's subscription get a

**Luxor Junior Crayfun set worth Rs. 45* absolutely Free! Rush!**




**PAGE AFTER PAGE WILL KINDLE YOUR CHILD'S IMAGINATION**

**ISSUE AFTER ISSUE, MONTH AFTER MONTH**

* offer valid upto 30th September, 2003 only.




## SUBSCRIPTION FORM

Please enrol me as a subscriber of Junior Chandamama. I give below the required particulars:

Name : ..........................................

Address : ......................................

.....................................................

.....................................................

PIN Code : ..................................

I am remitting the amount of Rs.120/- for 12 issues by Money Order/Demand Draft/Cheque No. ...................... on.................................... Bank .................................... branch drawn in favour of Chandamama India Ltd., encashable at Chennai (outstation cheque to include Rs.25/- towards Bank Commission).

Place : ....................

Date : ....................                Signature

# अतित्वराशीलता

कोदण्डः हरिपुरवासी । सः अधिकत्वराशीलः । सर्वेषु अपि कार्येषु त्वराप्रदर्शनं तस्य स्वभावः ।

कोदण्डस्य पुत्र्याः विवाहः सम्पन्नः । सा पतिगृहं गतवती अपि । कानिचन वस्तूनि तस्याः ग्रामे शिवपुरे न लभ्यन्ते स्म, हरिपुरमात्रे एव लभ्यन्ते स्म । तादृशानि कानिचन वस्तूनि तस्याः पतिगृहं प्रापणीयानि आसन् । तादृशानि वस्तूनि वस्त्रेण बद्ध्वा शिवपुरीं प्रति गमनाय नदीतीरं गतवान् कोदण्डः । तटतः किञ्चिद्दूरे दृश्यते स्म नौका । नौकायां बहवः जनाः दृश्यन्ते स्म ।

'यदि अहं यथाशीघ्रं नौकां न प्राप्नुयां तर्हि मम वस्तूनां निमित्तं योग्यं स्थलं न प्राप्येत । कानिचन वस्तूनि नष्टानि भवेयुः अपि । अतः मया शीघ्रातिशीघ्रं नौका प्राप्तव्या' इति सङ्कल्प्य सः युतकादिकम् अपनीय बन्धं च शिरसि आरोप्य नदीम् अवतीर्य वेगेन अग्रे गतवान् ।

तस्य प्रयत्नः सफलः । सः नौकायाम् उपविष्टवान् । तदा तस्य पुरतः उपविष्टः अवदत् – ''नौकापर्यन्तम् एवं किमर्थं कष्टेन आगतम् ? नौका तु अचिरात् एव तीरं प्राप्नुयात् एव । तीरम् आगच्छन्तीं नौकां नद्याम् आरुह्य पुनः तीरस्य प्राप्तौ कोऽयम् उत्साहः भवतः ?'' इति ।

तदा कोदण्डः अवगतवान् यत् एषा शिवपुरीतः आगच्छन्ती नौका, एतस्याः आरोहणाय मया व्यर्थः प्रयासः कृतः इति ।





# वास्तविकः कुरूपी

जगदीशः जगन्नाथपुरस्य निवासी । वीरः शूरः चेति उभौ पुत्रौ तस्य । बाल्ये उष्णजलपातात् वीरस्य मुखस्य चर्म किञ्चित् दग्धं जातम् आसीत् । मुखे दाहचिह्नानि दृश्यन्ते स्म । अतः कुरूपी इव परिलक्ष्यते स्म सः । किन्तु तस्य हृदयं नितरां निर्मलम् आसीत् । तस्य व्यवहारः अत्युत्तमः आसीत् । तस्य अनुजस्य शूरस्य व्यवहारः न एतादृशः । स्वस्य सौन्दर्यस्य विषये महान् गर्वः तस्य ।

कदाचित् जगदीशः स्वस्य अजान् चारणाय नीतवान् । स च घर्मकालः । वीरः वृक्षस्थानि मृदूनि किसलयानि उत्पाट्य अजेभ्यः खादनाय यच्छन् आसीत् । शूरः तस्य साहाय्ये निरतः आसीत् ।

उष्णकाले अपि कार्ये रतौ पुत्रौ दृष्ट्वा जगदीशः सन्तोषेण अवदत् - ''वीर ! कानिचन ताडमूलानि आनयतु । तानि पक्त्वा खादाम'' इति ।

अल्पे एव काले वीरः कानिचन ताडमूलानि उत्पाट्य आनीतवान् । एतदभ्यन्तरे शूरः कानिचन काष्ठानि सङ्गृहीतवान्, अग्निं प्रज्वाल्य ताडमूलानि पक्कवान् च । यावत् ते सुखेन उपविश्य तानि खादन्तः आसन् तावता ग्रामस्य पुरोहितः धनञ्जयशास्त्री तत्र आगतः ।

जगदीशः सन्तोषेण – ''शास्त्रिवर्य ! समये उपस्थितः भवान् । किं कानिचन ताडमूलानि गृहं नयेत् भवान् ? कानिचन आनेतुं किं वदानि ?'' इति अवदत् ।

''आनाययतु । अहम् अपि एतदेव वक्तुम् इष्टवान् आसम् । सङ्कोचवशात् न उक्तं मया, तावदेव । किन्तु मम आगमनस्य उद्देशः अन्यः एव अस्ति'' इति अवदत् शास्त्री ।

''शास्त्रिवर्य ! केन उद्देशेन अत्र आगतं भवता ?'' इति पृष्टवान् जगदीशः ।

''जगदीश ! भवान् जानाति एव यत् एतस्मिन् ग्रामे एव विश्वस्य अहं जीवामि इति । मया एका धेनुः दानरूपेण प्राप्ता अस्ति । तस्याः पोषणाय तृणानि



आवश्यकानि खलु ? अहं पुरोहितः अस्मि । अतः भवन्तं पृच्छामि । किं भवान् मह्यं कांश्चन तृणबन्धान् दद्यात् ?'' इति पृष्टवान् शास्त्री ।

''तृणबन्धानां दाने का वा आपत्तिः ? मम पुत्रयोः अन्यतरः कांश्चन तृणबन्धान् आनीय दद्यात् अद्यैव । अथवा तां धेनुं मम गृहं प्रति एव प्रेषयतु । मम धेनूः इव ताम् अपि पोषयिष्यामि । यदा भवान् इच्छति तदा तां प्रतिनयतु । तदस्तु, इदानीं तु वृक्षच्छायायाम् उपविश्य वार्तालापं करवाव तावत्'' इति उक्तवान् जगदीशः ।

ततः तौ वृक्षस्य मूलं गतवन्तौ । तावता ताडमूलानि सङ्गृह्य शूरः अपि तत्र आगतवान् । सः शास्त्रिणम् अवदत् - ''शास्त्रिवर्य ! मम अग्रजस्य निमित्तं किं योग्यां काञ्चित् वधूम् अन्वेष्टुम् अर्हेत् भवान् ? सः कुरूपी अस्ति इत्यतः तस्य विवाहः कष्टकरः जातः । तस्य कारणतः सुन्दरस्यापि मम विवाहः जायमानः नास्ति । मह्यं स्वपुत्रीं दातुं सर्वे समुत्सुकाः । किन्तु अग्रजस्य विवाहः यावत् न भवति तावत् मम विवाहः अपि न भवेत् खलु ? अतः तस्य विवाहस्य विषये किञ्चित् साहाय्यं करोतु'' इति ।

शूरस्य वचनं श्रुत्वा वीरः नितरां खिन्नः । जगदीशः अपि असन्तुष्टः । तथापि सः स्वस्य भावं निगूहीतवान् ।

शास्त्री ताडमूलानि स्वीकुर्वन् - ''शूर ! कीदृशम् एतत् वचनं भवतः ! अन्यस्य खेदनं महते पापाय । किं सौन्दर्यमात्रम् एव जनं श्रेष्ठं करोति ? न खलु ? गुणैः एव जनः पूज्यः भवति । वीरः सुन्दरः नास्ति चेदपि गुणी अस्ति । अतः योग्या पत्नी प्राप्यते तेन'' इति शूरम् उद्दिश्य उक्त्वा वीरम् उद्दिश्य पुनः अवदत् - ''वीर ! भवान् तु गुणानां खनी अस्ति । मम तु विश्वासः अस्ति यत् उत्तमा एव पत्नी भवता प्राप्यते इति । भवान् गोविन्दपुरं गच्छतु । तत्र गोपालः नाम कश्चित् अस्ति । तेन मिलतु । तस्मात् भवतः हितं भविष्यति'' इति ।

शास्त्रिणः वचनं श्रुतवतः वीरस्य मनसि कुतूहलम् उत्पन्नम् । अतः सः केषाञ्चित् दिनानाम् अनन्तरं गोविन्दपुरं गतवान् । अल्पेन एव अन्वेषणेन तेन गोपालस्य गृहं प्राप्तम् । गोपालः पुष्पवणिक् । स्वस्य क्षेत्रे वर्णमयानि पुष्पाणि वर्धयित्वा सः तेषां विक्रयणं करोति स्म । क्षेत्रस्य पार्श्वे एव गृहं निर्माय पत्न्या गङ्गया, पुत्र्या ज्योतिर्मय्या च सह सुखेन जीवनं यापयति स्म ।

सः वीरं दृष्ट्वा अचिन्तयत् यत् अयं कश्चन पुष्पाणां क्रेता इति । शास्त्रिणा सः प्रेषितः इति यदा ज्ञातं तदा सः तम् आदरेण स्वागतीकृत्य गृहस्य अन्तः नीतवान् ।

वार्तालापसमये गोपालः वीरम् अवदत् – ''वत्स ! केभ्यश्चित् वर्षेभ्यः पूर्वं चौर्यसमये अहम् आरक्षकैः गृहीतः कारागारे स्थापितश्च आसम् । तस्मात् 'चोरः' इति अपख्यातिः प्राप्ता मया । कारागारात् बहिः आगमनस्य अनन्तरं मया विलक्षणः अनुभवः प्राप्तः । कोऽपि मयि न विश्वसिति स्म, साहाय्यं च न करोति स्म । अतः मम जीवनं दुस्तरं जातम् । तस्मात् अहं पुनरपि चौर्ये प्रवृत्तः जातः । पूर्वं यत्र चौर्यं कृतं तत्रैव चौर्याय मया उद्युक्तम् । तत्समये गृहस्वामिना अहं गृहीतः । गृहस्वामी उत्तमः विवेकी च आसीत् । सः माम् उद्दिश्य – ''जन्मना कोऽपि चोरः न भवति । परिस्थितेः विषमताकारणतः कदाचित् चौर्यं कृतं भवति । तथा यैः चौर्ये प्रवृत्तं ते दण्डिताः चेत् तेषु परिवर्तनं भवति एव इति न । भवान् अपि एतादृशः अस्ति इति मम अभिप्रायः । अतः अहं भवन्तं कारागारं न प्रेषयिष्यामि'' इति उक्त्वा मां स्वगृहे सेवकत्वेन नियोजितवान् । वर्षद्वयानन्तरं मम स्वभावे परिष्कारः जातः इत्येतम् अंशं लक्षितवान् सः स्वकार्यालयस्य उद्योगिनः पुत्रीं गङ्गां मह्यं दापितवान् । ततः अहं जीवने प्रगतिं प्राप्तवान् । इदानीम् अहं धनेन सम्पन्नः अस्मि । तथापि मम पुत्रीं ज्योतिर्मयीं परिणेतुं कोऽपि न इच्छति । तां चोरस्य पुत्रीं भावयन्ति ते । केचन उपहसन्ति यत् चोरम् एव कश्चित् जामातरं करोतु इति'' इति ।



यावत् वीरः किमपि वक्तुम् उद्युक्तः तावता गङ्गा उक्तवती - ''भवद्विषये शास्त्रिणा सर्वम् उक्तम् अस्ति । मानवजीवने गुणाः प्रधानाः, न तु सौन्दर्यम् । वयं स्वपुत्रीं भवते दातुम् इच्छामः । किं तां परिणयेत् भवान् ?'' इति ।

तदा वीरः गोपालम् अवदत् - ''अहं कुरूपी इति अहं जानामि । भवतां परिस्थितेः दुर्लाभं स्वीकर्तुं न इच्छति मम मनः । यदि अहं भवतः पुत्रीं परिणयेयं तर्हि सा दुःख-भागिनी भवेत् । अतः ताम् अहं न परिणेष्यामि । मम कश्चन भ्राता अस्ति । सः सुन्दरः । सः भवतः पुत्र्याः अनुरूपः'' इति । ततः सः पित्रे वार्तां प्रेषितवान् ।

एतां वार्तां प्राप्य शूरः, जगदीशः, तस्य पत्नी च गोविन्दपुरम् आगताः । शूरः ज्योतिर्मय्याः रूपं दृष्ट्वा तु नितरां सन्तुष्टः । किन्तु सा चोरस्य पुत्री इति तेन यदा ज्ञातं तदा सः तस्याः परिणयं निराकृतवान् ।

एतत्सर्वं ज्योतिर्मयी अपि पश्यन्ती आसीत् एव । यदा शूरः निराकृतिवचनानि उक्तवान् तदा नितरां क्रुद्धा सा अवदत् - ''कीदृशं वचनम् एतत् ! काकानां कोकिलानां च वर्णः समानः चेदपि कोकिलः मधुरस्वरेण काकम् अतिशेते । काकः तु स्वस्य कर्णकठोररवेण काकत्वं प्राप्तवान् भवति । भवादृशानां बहूनां दर्शनात् मया अवगतं यत् मानवेषु अपि बहवः काकाः इव भवन्ति इति । स्वसौन्दर्यविषये गर्वः भवतः । भवतः चिन्तनं मलिनम् । वचनम् अमधुरम् । एतादृशं भवन्तं परिणेतुम् अहम् अपि न इच्छामि । यदि भवतः अग्रजः माम् अङ्गीकुर्यात् तर्हि तमेव परिणेतुं सिद्धा अस्मि'' इति ।

सर्वे ज्योतिर्मय्याः वचनं प्रशंसितवन्तः । जगदीशः शूरम् उद्दिश्य - ''या भवते न रोचते तस्याः विषये यथेच्छं कथनं न वरम् । जिह्वानिग्रहः भवेत् जीवने । यः स्ववाणीं नियन्त्रयितुं न शक्नोति सः एव कुरूपी'' इति उक्त्वा वीरं पश्यन् अवदत् - ''ज्योतिर्मयी भवतः परिणयम् अङ्गीकृतवती अस्ति । किं भवान् तां परिणयेत् ?'' इति ।

वीरः अङ्गीकारपूर्वकं शिरः चालितवान् । ततः योग्ये मुहूर्ते वीरज्योतिर्मय्योः विवाहः प्रवृत्तः । वीरः पत्न्या सह सुखेन जीवनं कृतवान् ।





# मायासरोवरः

## १७

*[मायासरोवरेश्वरः यदा नरभक्षकाधीनः जातः तदा सिद्धसाधकः तत्र गतः । स्वनायकस्य रक्षणाय उद्युक्तः मकरकेतुः सिद्धसाधकस्य सेवकं जलवृकराक्षसं व्रणितं कृतवान् । नरभक्षकाः यावत् तान् बन्धिनः कर्तुं प्रायतन्त तावता केचन अश्वारोहिणः तत्र आगताः । तदनन्तरम् ....]*

सिद्धसाधकः यदा स्वशूलं मायासरोवरेश्वरस्य उरः लक्ष्यीकृत्य गृहीतवान् तदा भयेन कम्पमानः मायासरोवरेश्वरः अवदत् - ''एषः तु अधर्मः । यदा शत्रुः असावधानः भवति तदा तस्य मारणाय प्रयत्नः सर्वथा न धर्मसम्मतः'' इति ।

तदा सिद्धसाधकः स्वस्य शूलेन भूमिं सकृत् विद्ध्वा अवदत् - ''अहं न सामान्यः, अपि तु महावीरः अस्मि । अतः भवता सूचितं युद्धनियमम् अहम् अङ्गीकरोमि । भवान् खड्गं गृहीत्वा युद्धाय सन्नद्धः भवतु तावत् । भवतः पराक्रमं द्रष्टुम् इच्छामि अहम्'' इति ।

एतत् श्रुत्वा मायासरोवरेश्वरः स्वस्य अनुचरं मकरकेतुं दृष्टवान् । एतदभ्यन्तरे अश्वारोहिणां नेता तत्र आगत्य तेषां पुरतः अश्वात् अवतीर्णः ।

सिद्धसाधकः तं क्रोधेन पश्यन् अवदत् - ''अये, कः भवान् ? आवयोः विवादस्य



अश्वारोही तं सकृत् आपादमस्तकं दृष्ट्वा अवदत् - ''अहो ! भवान् सिद्धसाधकः खलु ? केभ्यश्चित् दिनेभ्यः पूर्वं भवान् हिरण्यपुरस्य रक्षकस्य शिरः कर्तितवान् आसीत् ननु ? एतस्य अपराधस्य निमित्तं भवान्, अन्यः कश्चन च महाराजस्य समीपं नीतवन्तौ आस्ताम् । एतत् सत्यं खलु ?'' इति ।

''भवान् तु मां सम्यक् अभिजानाति । किन्तु अहं भवतः नाम न स्मरामि खलु ?'' इति अवदत् सिद्धसाधकः ।

''मम नाम वीरसेनः इति । महाराजस्य कनकाक्षस्य पुत्रयोः अन्वेषणाय भवता सह निर्गतः सः जयशीलनामकः युवकः क्व गतः ?'' इति अपृच्छत् वीरसेनः ।

''जयशीलः हंसरथेन अचिरात् एव अत्र आगमिष्यति । भवान् किञ्चित् अपसरतु तावत् । एतं विकत्थनकर्तारं भीरुशिखामणिं यथायोग्यम् अहम् दण्डयिष्यामि'' इति स्वस्य शूलम् उन्नीय कोपेन अवदत् सिद्ध-साधकः ।

''मम उपस्थितौ रक्तपातः भवितुं सर्वथा न अर्हति'' इति वदन् वीरसेनः स्वस्य अनुचरान् सङ्केतेन किमपि सूचितवान् ।

क्षणाभ्यन्तरे केचन अश्वारोहिणः खड्गं हस्तेन स्वीकृत्य सिद्धसाधकं परितः स्थित-वन्तः ।

तदा सिद्धसाधकः परितः दृष्टिं प्रसारयन् अवदत् - ''अस्मान् परितः ते नरभक्षकाः सन्ति, ये च बहुभ्यः दिनेभ्यः बुभुक्षिताः सन्ति । ते भवतः सर्वान् क्षणमात्रेण भक्षयितुं

मध्ये प्रवेशः किमर्थं क्रियते भवता ?'' इति ।

एतत् श्रुत्वा सः अश्वारोही उपेक्षापूर्वकम् उच्चैः हसितवान् । किन्तु समीपे एव स्थितं नरवानरं जलग्रहं च दृष्ट्वा सः भीतः । यतः सः इतः पूर्वं तादृशौ न दृष्टवान् आसीत् । तयोः शक्तिसामर्थ्यादिकम् अपि सः सर्वथा न जानाति स्म ।

सः मन्दस्वरेण अवदत् - ''अहं कस्य आदेशस्य अनुगुणम् अत्र आगतः इति किं भवान् न ज्ञातवान् ? किं मया श्राविता आज्ञा भवता न श्रुता ?'' इति ।

''न । मया किमपि न श्रुतम् । माया-सरोवरेश्वरस्य पलायनस्य निवारणे अहम् उद्युक्तः आसम् । अतः एव पृच्छामि - अश्वान् आरुह्य आगताः भवन्तः के ?'' इति अपृच्छत् सिद्धसाधकः ।

समर्थाः सन्ति । किं भवान् तेषाम् आहारः भवितुम् इच्छति ? भवतः प्रयासः किम् आत्मघातकं न ?'' इति ।

''लाभहान्यादिकम् अहं न चिन्तयामि । इतः अनतिदूरे एव राज्ञः कनकाक्षस्य शिबिरम् अस्ति । भवन्तः सर्वे तत्र गच्छन्तु । तत्र यथौचित्यं निर्णयः भविष्यति'' इति अवदत् वीरसेनः ।

तदा सिद्धसाधकः वीरसेनं क्रोधेन पश्यन् अवदत् – ''एषा भवतः आज्ञा, उत विज्ञप्तिः ? अहं महाकालमात्रस्य आज्ञां पालयामि, न तु अन्यस्य कस्यापि । स्मरतु एतत्'' इति ।

अत्रान्तरे जलवृकः अवगतवान् यत् मम स्वामी अश्वारोहिणां विषये क्रुद्धः अस्ति इति । अतः सः गदां स्कन्धे आरोप्य पादेन भूमिं प्रहरन् उच्चैः गर्जनं कृतवान् । एतत् दृष्ट्वा नरवानरः अपि उच्चैः हूङ्कारं कृतवान् । तयोः गर्जनतः अरण्यं प्रतिध्वनितं जातम् । तयोः विकृताकारयोः अट्टहासं श्रुत्वा कश्चन अश्वः भीतः जातः । सः स्वस्य अग्रिमपादौ उन्नीय हेषारवम् अकरोत् । तस्य एतस्मात् व्यवहारात् तदुपरि उपविष्टः सैनिकः भूमौ अपतत् ।

एतत् दृष्ट्वा भीतिं प्राप्तवान् वीरसेनः सम्मानपुरस्सरम् अवदत् – ''महाराय ! अहमिव भवान् अपि हिरण्यपुरस्य नागरिकः एव । किं भवान् महाराजस्य दर्शने आसक्तः न ?'' इति ।

एतत् श्रुत्वा हर्षं प्रकटयन् सिद्धसाधकः – ''भवता युक्तम् एव उक्तम् । महाराजस्य



दर्शनं ममापि कर्तव्यम् । अतः तत्र गच्छाम तावत् । अस्माभिः सह एतौ दुष्टौ नरभक्षकजनान् चापि नयाम'' इति वदन् सः पार्श्वे दृष्टिं प्रसारितवान् । तत्र माया-सरोवरेश्वरः मकरकेतुः वा न आसीत् ।

आश्चर्यं प्राप्नुवन् सिद्धसाधकः अवदत् – ''अहो, एतौ दुष्टौ क्व पलायितवन्तौ ?'' इति ।

सिद्धसाधकस्य प्रयत्नं दृष्ट्वा नरभक्षकाः सर्वे उच्चैः हसितवन्तः । तेषां नायकः शूरसिंहः गणनायकः च अग्रे आगत्य उक्त-वन्तौ – ''यदा भवन्तः अश्वारोहिभिः सह कलहे निमग्नाः आसन् तदा तौ विना शब्दम् इतः निर्गतवन्तौ । तयोः ग्रहणाय अस्मदीयाः केचन गताः सन्ति'' इति ।

''तयोः पलायनं दृष्ट्वा अपि किमर्थं वयं न सूचिताः भवद्भ्याम् ? भवद्भ्यां दोषः



कृतः । अतः भवन्तौ बन्धिनौ कृत्वा महाराजसमीपं नीयेते अस्माभिः'' इति उक्त्वा सिद्धसाधकः जलवृकराक्षसम् उद्दिश्य आदिशत् – ''हे जलवृक ! एतौ अश्वस्य उपरि उपवेश्य सम्यक् बध्नातु'' इति ।

जलवृकः विद्युद्वेगेन गत्वा शूरसिंहं गणाचार्यं च सुदृढं गृहीतवान् । कञ्चित् अश्वारोहिणम् अश्वात् पातयित्वा तस्य अश्वस्य उपरि एतौ आरोप्य बद्धवान् ।

एतदनन्तरं सिद्धसाधकः वीरसेनम् अवदत् – ''भवान् अग्रे गच्छन् मार्गं दर्शयतु । वयं कनकाक्षमहाराजस्य दर्शनं प्राप्नुयाम'' इति ।

अश्वदलस्य नायकः स्वस्य अनुचरान् आज्ञापितवान् यत् महाराजस्य शिबिरं प्रति गच्छाम इति । सर्वे सैनिकाः ताम् आज्ञां शिरसा वहन्तः ततः प्रस्थितवन्तः । नर-वानरम् आरूढवान् सिद्धसाधकः तान् अनुसृतवान् ।

तस्मिन् एव समये आकाशमार्गेण गच्छन्तः जयशीलः तत्सुहृदः च भयात् धावन्तीं क्रन्दन्तीं काञ्चित् तरुणीम् अरण्ये दृष्टवन्तः । अनुसृत्य आगतात् व्याघ्रात् आत्मानं रक्षन्ती सा इतस्ततः धावति स्म । वृक्षशाखां ग्रहीतुम् अपि प्रयतते स्म ।

हंसरथे स्थितः वैद्यः देवशर्मा ऐदम्प्राथम्येन एतत् दृष्टवान् । एतत् दृश्यं तस्मिन् भीतिम् अजनयत् । सः उद्वेगेन जयशीलस्य स्कन्धे हस्तं संस्थाप्य अवदत् – ''जयशील ! व्याघ्रेण अनुस्त्रियमाणां तां तरुणीं पश्यतु तावत् । सा अस्ति प्रायः काञ्चनमाला एव । मायासरोवरेश्वरेण अपहृता कनकाक्षमहाराजस्य पुत्री एषा एव । महता अपायेन ग्रस्ता अस्ति सा इदानीम्'' इति ।

जयशीलः सकृत् अधः दृष्टिं प्रसार्य उद्वेगमिश्रितेन स्वरेण हंसरथसारथिम् आज्ञापितवान् – ''अये, झटिति एव रथं भूमौ अवतारयतु'' इति ।

सारथिः अधः दृष्ट्वा भूमिस्थं वृक्षसमूहं परिलक्ष्य अवदत् – ''महाशय ! अत्र रथस्य अवतारणम् अशक्यम् । किञ्चिदग्रे वृक्ष-रहिते कस्मिंश्चित् स्थले रथम् अवतार-यिष्यामि'' इति ।

तदा क्रोधं प्राप्तवान् जयशलः – ''अये मूर्ख ! अवतारणयोग्यं स्थलम् अन्विष्य यावत् भवान् रथम् अवतारयेत् तावता

व्याघ्रः तां राजकुमारीं खादितवान् स्यात् । अतः अविलम्बेन रथम् अधः नयतु । अहं वृक्षशाखायां कुर्दनं कृत्वा वृक्षात् अवतीर्य राजकुमार्याः रक्षणाय प्रयासं करिष्यामि'' इति अवदत् ।



जयशीलस्य आदेशं पालयन् रथ-चालकः हंसानां कण्ठे बद्धां रज्जुम् आकृष्य रथं वृक्षाग्रसमीपं नीतवान् । जयशीलः अविलम्बेन रथात् कुर्दनं कृत्वा हस्ताभ्यां वृक्षशाखां दृढं गृहीतवान् । किन्तु सा शाखा दुर्बला आसीत् । तदीयं भारं वोढुम् असमर्था सा शाखा भग्ना सती भूमौ अपतत् ।

शाखायाः भूमिस्पर्शात् पूर्वम् एव जयशीलः उल्लङ्घनं कृत्वा हस्तपादादिभङ्गं निवारितवान् । काञ्चनमालाम् अनुसृत्य गच्छन् व्याघ्रः समीपे एव जातं शब्दं श्रुत्वा गमनं स्थगयित्वा मुखं परिवर्त्य अपश्यत् । 'एषः एव योग्यः अवसरः' इति मन्वाना काञ्चनमाला उत्प्लुत्य एकां वृक्षशाखां गृहीतवती । व्याघ्रः तस्याः अधः स्थित्वा गर्जन् तां ग्रहीतुं प्रयत्नम् आरब्धवान् ।

खड्गादिकं ग्रहीतुं समयः न आसीत् इत्यतः जयशीलः द्वित्राणि पदानि अग्रे गत्वा व्याघ्रस्य पुच्छं गृहीत्वा बलात् आकृष्य उन्नीय भ्रमयित्वा दूरे क्षिप्तवान् ।

काञ्चनमाला शाखां गृहीत्वा लम्बमाना एव जयशीलं दृष्ट्वा अवदत् - ''महोदय ! समये उपस्थितेन भवता व्याघ्रात् अहं रक्षिता । नितराम् उपकृता अस्मि अहम्'' इति ।

जयशीलः तस्याः सौन्दर्यातिशयं दृष्ट्वा नितराम् आश्चर्यचकितः । बहूनि कष्टानि सोढ्वा आगतेन तेन इदानीं काञ्चनमाला दृष्टा आसीत् । काञ्चनवर्मा कुत्र इति तु तेन न ज्ञायते ।

जयशीलः ताम् अवदत् - ''भवती काञ्चनमाला इति अहं जानामि । भवत्याः अपहरणकथा अपि मया ज्ञायते । भवत्याः भ्राता काञ्चनवर्मा क्व ? हंसरथात् पतिता भवती कथम् आत्मरक्षणं कर्तुं शक्त-वती ?'' इति ।

काञ्चनमाला वृक्षशाखां परित्यज्य भूमौ तिष्ठन्ती अवदत् - ''महाशय ! हंसरथात् अहं सौभाग्यवशात् कस्याञ्चित् लघुनद्यां पतिता । अतः विनापायम् अहं स्थिता अस्मि । मया सह पतितौ मायासरोवरेश्वरः तदङ्गरक्षकः चापि प्रायः सजीवं तिष्ठतः

एतस्मिन् अरण्ये कुत्रचित् । मम सहोदरः इदानीं मायासरोवरेश्वरस्य गृहे बन्दी अस्ति'' इति ।

तदा जयशीलः अवदत् - ''माया-सरोवरेश्वरविषये किञ्चित् विवरणं ज्ञायते मया । तस्य सेवकौ सर्पसख-सर्पणखौ मया दृष्टौ आस्ताम् । तदनुचरः अन्योऽपि मया दृष्टः एव । मायासरोवरेश्वरस्य बन्धनतः पूर्वं मोचनीयः अस्ति भवत्याः भ्राता । तदर्थं कः उपायः इति भवती जानीयात् कदाचित् । ततः पूर्वम् अत्रैव कुत्रचित् स्थितः मम सुहृत् सिद्धसाधकः द्रष्टव्यः मया'' इति ।

एतदनन्तरं काञ्चनमाला जयशीलेन सह गन्तुं सन्नद्धा जाता । तावता सचेतनतां प्राप्तवान् व्याघ्रः मन्दम् उत्थाय गर्जनं कृत्वा आक्रमणाय उद्युक्तः । किन्तु सामर्थ्यस्य अभावात् सः तत्रैव अपतत् ।

जयशीलः खड्गम् आकृष्य व्याघ्रसमीपं गच्छन् - ''एषः अस्ति क्रूरः जन्तुः । इदानीं एषः व्रणितः अस्ति । व्रणितम् एतम् एवम् एव परित्यजेम चेत् एषः अन्येषाम् अपि अपायं कुर्यात् । अतः एतस्य संहारः एव वरम्'' इति अवदत् ।

''भवतः आगमने क्षणात्मकः विलम्बः यदि अभविष्यत् तर्हि एषः व्याघ्रः मां निश्चयेन अखादिष्यत्'' इति वदन्ती काञ्चनमाला जयशीलम् अनुसरन्ती व्याघ्र-समीपं गतवती ।

गुल्मानां पृष्ठतः स्थित्वा जलग्रहारूढः मायासरोवरेश्वरः एतत्सर्वं पश्यन् आसीत् । सः मुखं परिवर्त्य अश्वारूढं मकरकेतुम् अवदत् - ''जयशीलं बन्धुम् एषः एव सुसमयः । भवान् कमलनालैः रचितां रज्जुं क्षिप्त्वा तं कण्ठे बध्नातु'' इति ।

''महाराज ! जयशीलः महासत्त्वः अस्ति । तस्य वैरं न श्रेयसे'' इति अवदत् मकरकेतुः ।

''अये, भीरुः भवान्'' इति मकरकेतुं तर्जयित्वा मायासरोवरेश्वरः मकरकेतोः हस्तात् रज्जुं स्वीकृत्य जलग्रहं किञ्चित् अग्रे चालयित्वा पाशयुक्तं रज्जोः भागं त्रिवारं वायौ भ्रमयित्वा जयशीलस्य कण्ठं प्रति वेगेन क्षिप्तवान् ।

*- (अनुवर्तते)*



## वेताल-कथा

# उभौ मयूरौ

त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शवं स्कन्धे आरोप्य यथापूर्व मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये, राजन् ! कीदृशः गाढान्धकारः अस्ति इति ज्ञायते खलु भवता ? घोरः श्मशानमार्गोऽपि अस्ति अयम् । क्रूरजन्तूनां निवासस्थानम् एतत् । तथापि निश्चिन्ततया गच्छन् अस्ति खलु भवान् ! भवान् चिन्तितवान् स्यात् यत् अत्र ये वसन्ति तेषां सर्वेषां प्राणिनां जीवनरीतिम् अहं जानामि इति । किन्तु भवता स्मर्तव्यं यत् वन्यजीविनां व्यवहारविषये यदा निर्णीयते तदा पण्डिताः अपि प्रमाद्यन्ति इति । पूर्वं चन्द्रशर्मनामकेन चित्रकारेण अपि महान् प्रमादः



कृतः आसीत् । भवता अपि तादृशः प्रमादः न क्रियेत इत्येतदर्थं तदीयां कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा –

सुवर्णदेवः स्वर्णपुरीराज्यस्य राजा । प्राणिदया तस्य स्वभावः । निसर्गस्य रक्षणाय सः अनेकान् प्रयासान् करोति स्म । 'वन्यजीविनः हानिः कदापि न कल्पनीया' इति सः सदा वदति स्म ।

प्रतिवर्षं दीपावलीपर्वदिने राजा वृषभाणां धावनस्पर्धाम् आयोजयति स्म । उत्तमाय वृषभाय सः पारितोषिकं ददाति स्म अपि । ये रमणीयतया निसर्गं चित्रयन्ति तादृशान् चित्रकारान् अपि सम्मानयति स्म सः तदा ।

राजधानीतः अनतिदूरे कस्मिंश्चित् ग्रामे चन्द्रवर्मा नाम कश्चन चित्रकारः निवसति स्म । यस्यकस्यचिदपि चित्रम् अल्पे एव काले रचयति स्म सः । अतः बहवः धनिकाः तेन स्वचित्रं कारितवन्तः आसन् ।

कदाचित् चन्द्रवर्मा चिन्तितवान् यत् मया एवमेव ग्रामे स्थीयते चेत् न किमपि प्रयोजनं, मया अपि राजादिभिः दीयमानं पुरस्कारं प्राप्तुं प्रयासः करणीयः एव इति । अतः सः निर्णीतवान् यत् दीपावल्यवसरे राज्ञा या चित्रकलास्पर्धा आयोक्ष्यते तस्यां मया अपि भागः वोढव्यः एतस्मिन् वर्षे इति ।

अतः सः विशाले काष्ठफलके उभयोः मयूरयोः चित्रं रचितवान् । पिच्छं प्रसार्य नृत्यतोः मयूरयोः चित्रं तत् । मयूरयोः वर्णादिकम् अत्युत्कृष्टम् आसीत् ।

एतत् चित्रं दृष्ट्वा कलाभिमानी कश्चित् अवदत् – ''अहो, अपूर्वं चित्रम् एतत् ! एतयोः मयूरयोः दर्शनात् भासते यत् एतौ नेत्रयोः पुरतः एव नृत्यतः इति । यदि एतत् चित्रं गृहस्य स्वागतप्रकोष्ठे स्थाप्येत तर्हि गृहस्य शोभा द्विगुणिता भवेत्'' इति ।

तदा चित्रकलाभिज्ञः अपरः अवदत् – ''मयूरस्य कण्ठस्य वर्णः यः अस्ति सः नितराम् अपूर्वः । प्रायः सुनिपुणः अपि चित्रकारः एतादृशं वर्णमिश्रणं सज्जीकर्तुं न शक्नुयात् । शक्नुयात् चेदपि चित्रे यत् चाकचक्यं दृश्यते तस्य निर्माणे सः असमर्थः एव भवेत् । यदि एतत् चित्रं राज्ञे दर्श्येत तर्हि राजा निश्चयेन शतं सुवर्ण-नाणकानि पारितोषिकरूपेण दद्यात्'' इति ।

एतादृश्यः प्रशंसाः चन्द्रवर्मणे अपि

रोचन्ते स्म । अतः सः प्रशंसकान् पृच्छति स्म – "किं वस्तुतः अपि एतत् चित्रं तावत् उत्कृष्टम् अस्ति ?" इति । प्रशंसकाः पुनरपि चित्रस्य प्रशंसां कुर्वन्ति स्म । एतस्मात् चन्द्रवर्मा तृप्तः भवति स्म ।

दीपावलीदिने चन्द्रवर्मा मित्रेण सह वृषभशकटे उपविश्य राजधानीं गतवान् । अधिकारिभ्यः चित्रं दर्शितवान् च । अधिकारिणः तत् चित्रं दृष्ट्वा आश्चर्येण स्तब्धाः ।

महाराजः अपि तत् चित्रम् अपश्यत् । तस्मै अपि तत् चित्रम् अरोचत । सः चित्रं प्रशंसन् अवदत् – "एतत् पुरस्कारार्हम् अस्ति निश्चयेन" इति । तत्र उपस्थिताः अन्ये अपि एतम् एव अभिप्रायं प्रकाशितवन्तः ।



कश्चन आस्थानपण्डितः अवदत् – "एतत् चित्रं प्रथमपुरस्काराय योग्यम् अस्ति इत्यत्र नास्ति सन्देहः । पिच्छं प्रसार्य नृत्यतोः मयूरयोः पृष्ठभूमिकायां स्थितानां वृक्षाणां चित्रणं नितरां सहजम् अस्ति । दृश्यं तु नयनाभिरामम् अस्ति" इति ।

एतत् श्रुत्वा वृषभाणां स्पर्धायां भागं वोढुम् आगतेन कृषिकेण सह आगतः कश्चन वनवासी उच्चैः हसितवान् । तत् श्रुत्वा जनाः आश्चर्येण स्तब्धाः । महाराजः अन्ये च तं क्रोधपूर्णतया दृष्टवन्तः । तस्मात् भीतः सः वनवासी ततः पलायितुम् उद्युक्तः ।

तावता महाराजः 'तिष्ठतु' इति तम् आदिश्य शान्तस्वरेण अपृच्छत् – "भोः, किं भवते एतत् चित्रं न अरोचत ? किमर्थं हसितं भवता ?" इति ।

किं वक्तव्यम् इति यावत् वनवासी चिन्तयन् आसीत् तावता राजा पुनः अवदत् – "भोः, अलं भीत्या । भवतः हासस्य कारणं ज्ञातुम् इच्छामि अहम् । भवान् तु अरण्ये निवसति । अतः मयूराणां जीवनविषये सम्यक् ज्ञानं स्यादेव भवतः" इति ।

चन्द्रवर्मा अपि तं वनवासिनम् एतम् एव प्रश्नं प्रष्टुम् इच्छति स्म । तावता राज्ञा एव प्रश्नः पृष्टः इत्यतः सः सन्तुष्टः अभवत् ।

वनवासी राजानं चित्रकारं च सकृत् दृष्ट्वा अवदत् – "महाप्रभो, एतस्मिन् चित्रे कश्चन महादोषः अस्ति" इति ।

"एवम् ! यस्य दोषस्य उपस्थितिः अस्मासु केनापि न ज्ञाता तं कञ्चित् 'महादोषं' भवान् ज्ञातुं शक्तवान् ?" इति उपहासमिश्रितेन स्वरेण उक्तवान् राजा ।

''महाप्रभो ! मयूराणां जीवनक्रमं सम्यक् जानामि अहम् । पिच्छोपेतः मयूरः भवति पुमान् । मयूर्याः पिच्छं न भवति । मयूरीम् आक्रष्टुं मयूरः पिच्छं प्रसार्य नृत्यति । न कश्चिदपि मयूरः अपरस्य मयूरस्य पुरतः पिच्छं प्रसारयति । अन्यस्य मयूरस्य समीपं कदाचित् सः गच्छति कलहाय । तदा तु पिच्छं प्रसारितं न भवति'' इति विवृतवान् वनवासी ।

वनवासिनः वचनं श्रुत्वा तत्र स्थिताः सर्वे आश्चर्यचकिताः जाताः । केचन वनवासिने क्रुद्धाः अपि जाताः । किन्तु चन्द्रवर्मा तु शिरः उन्नीय वनवासिनं सकृत् दृष्ट्वा पुनः शिरः अवनमय्य चित्रं वस्त्रेण आच्छाद्य महाराजं प्रणम्य ततः निर्गतवान् ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन्, चन्द्रवर्मणा रचितं चित्रं महाराजेन अन्यैः च भूरि प्रशंसितम् आसीत् । कश्चन चित्रकलानभिज्ञः वनवासी किमपि उक्तवान् इत्यतः चन्द्रवर्मा स्पर्धारङ्गात् एव अपगतः यत् तत् किं न अनुचितम् ? वनवासिना चित्रकलाविषये स्वाभिप्रायः यः प्रकटितः सोऽपि अनुचितः खलु ? चित्रे वर्ण-योजनादिकम् उत्कृष्टम् आसीत् इत्येतम् अंशं तु कोऽपि तिरस्कर्तुं न अर्हति स्म खलु ? तथापि किमर्थं ततः निर्गतं चन्द्रवर्मणा ? मम एतेषां सन्देहानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''नगरजीवनात् दूरे स्थित्वा शुद्धं जीवनं यापयति वनवासी । पशुपक्षिणां विषये सम्यक् जानाति सः । चन्द्रवर्मणा यत् चित्रितं तत् पक्षिसहजं न आसीत् । एतत् दर्शनमात्रेण अवगतं तेन । अतः सः तत् ज्ञापितवान् । ज्ञातस्य दोषस्य स्मारणं दोषाय न खलु ? चन्द्रवर्मा महा-चित्रकारः इति तु सत्यम् । वर्णमिश्रणादिना सः राज्ञि अपि प्रभावं जनयितुं शक्तवान् । किन्तु वनवासी यदा चित्रे अवास्तविकतां दर्शितवान् तदा चन्द्रवर्मा स्वस्य निसर्ग-परिशीलने असामर्थ्यं ज्ञातवान् । अतः सः ततः उत्थाय गतवान् । दोषसहिताय चित्राय पारितोषिकं न इष्टवान् सः'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।





# शुभप्रदः हारः

शम्भुप्रसादः कृष्णराजपुरस्य भूस्वामी । जनाः तस्य तत्परिवारस्य च विषये विशेषादरं प्रकटयन्ति स्म । शम्भुप्रसादस्य मरणस्य अनन्तरं तदीया पत्नी रत्नावती भू-स्वामित्वकार्यभारस्य वहनम् आरब्धवती । तस्याः चत्वारः पुत्राः एतस्मिन् कार्ये साहाय्यं कुर्वन्ति स्म । तेषु कदापि मतभेदः न भवति स्म । जनाः वदन्ति स्म यत् सहोदराः सर्वे एवं भवेयुः इति । वस्तुतः तु तेषु सहोदरेषु विवादः न भवति स्म एव इति न । किन्तु यदा अल्पः मतिभेदः उत्पद्यते तदा रत्नावती तम् उपायेन निवारयति स्म । अतः गृहच्छेदः अन्यैः न ज्ञायते स्म ।

तस्य गृहस्य सेवकः शिवः । तस्य विवाहः जातः । तस्य पत्नी गौरी अपि भूस्वामिगृहस्य सेविका जाता । सा यद्दिने भूस्वामिगृहं प्रति सेविकात्वेन आगता तस्मिन् एव दिने अन्तिमः भूस्वामिपुत्रः रामराजः पुत्रवान् जातः ।

गौरी सुन्दरी बुद्धिमती च । गृहकार्येषु सुनिपुणा अपि । अतः सा अल्पे एव काले रत्नावत्याः प्रिया जाता । द्वित्रमासाभ्यन्तरे तु रत्नावतीगौर्योः मैत्री प्रवृद्धा । रत्नावती अचिन्तयत् यत् गौरीं विना गृहकार्यनिर्वहणं क्लेशाय एव भवेत् इति । अतः सा गौर्यै अधिकं वेतनं ददाति स्म । तस्याः एषः व्यवहारः स्नुषाणां प्रियः न आसीत् ।

ततः वर्षत्रयानन्तरं रामराजः पुत्रीवान् जातः । एतावत्पर्यन्तं सर्वे रामराजस्य पुत्रे विशेषवात्सल्यं प्रदर्शयन्ति स्म । प्रीत्या तम् आलिङ्गन्ति स्म, तं सर्वे बहिः सञ्चाराय नयन्ति स्म । गृहे 'राजकुमारः' इत्येव निर्दिश्यते स्म सः सर्वैः । तस्मै क्रीडनकानि दापयन्ति स्म सर्वे अपि । किन्तु यदा रामराजस्य पुत्री जाता तदा तेषां प्रीतिः तस्यां जाता । सर्वे ताम् एव उन्नयन्ति ।

अल्पवयस्कः बालकः एतत् परिवर्तनं न अहसत । यदि सः भगिनीं स्पृशति तर्हि सर्वे तं तर्जयन्ति स्म । तस्मिन् सर्वेषां प्रीतिः न्यूना



जाता । एतत् असहमानः सः भगिनीं नखक्षतादिभिः पीडयति स्म । यदा तस्य एतादृश्यः दुश्चेष्टाः अधिकाः जाताः तदा सर्वे चिन्तितवन्तः यत् एषः कानिचन दिनानि मातुलगृहे वासं करोति चेत् वरम् इति ।

किन्तु सः बालकः मातुः दूरे स्थातुं न ऐच्छत् । 'अहं कदापि गृहात् अन्यत्र गच्छामि' इति वदन् सः रोदनम् अकरोत् । तदा गौरी तम् अनुनयन्ती अवदत् यत् अहम् अपि भवता सह आगमिष्यामि इति । तदा सः बालकः मातुलगृहं प्रति गमनम् अङ्गीकृतवान् ।

तस्य मातुलगृहं यस्मिन् नगरे आसीत् तस्मिन्नेव नगरे गौर्याः मातृगृहम् अपि आसीत् । अनन्तरदिने गौर्या सह सः बालकः मातुलगृहं प्रति अगच्छत् ।

तस्मिन् एव दिने स्नुषासु अन्यतमायाः चन्द्रमत्याः कश्चन सुवर्णहारः गृहे कुत्रापि न दृष्टः । स्नानार्थं गमनसमये सा हारं पूजागृहे स्थापितवती आसीत् । सायं यदा दृष्टं तदा हारः तत्र न आसीत् । अतः सा भीता जाता । स च हारः परम्परया स्नुषाभिः ध्रियमाणः आसीत् । 'शुभप्रदः हारः' इति तस्य विषये विश्वासः आसीत् रत्नावत्याः । तस्मिन् दिने बाह्यः कोऽपि गृहं न आगतः आसीत् । अतः 'हारः क्व गतः स्यात् ?' इति सर्वे चिन्तामग्नाः ।

''भवतः अग्रजस्य पुत्रः नगरे अध्ययनाय वसन् आडम्बरजीवनं करोति इति श्रूयते । तदर्थं धनस्य आवश्यकता स्यादेव खलु ? अतः सः एव चन्द्रमत्याः हारं चोरितवान् स्यात्'' इति पतिम् उक्तवती द्वितीया स्नुषा महेश्वरी ।

''कस्मिन् बिले कीदृशः सर्पः वसति इति कः जानाति ? भवतः अग्रजस्य पुत्री उत्तमा इव लक्ष्यते, सर्वैः सह सम्यगेव व्यवहरति अपि । किन्तु यथा वयं चिन्तयामः तथा सरला तु न सा । दिनद्वयात् पूर्वं सा मम कर्णाभरणं धृत्वा विद्यालयं गतवती आसीत् । मया यदा दृष्टं तदा म्लानमुखी सा हारं प्रत्यर्पितवती । मम तु भाति यत् सा आभरणलोभेन चन्द्रमत्याः कण्ठहारं धृत्वा गतवती स्यात्, तच्च कथमपि विनष्टं स्यात् इति'' इति पतिम् उक्तवती तृतीया स्नुषा राजेश्वरी ।

''कर्मकरेषु अधिकः विश्वासः न करणीयः इति अहं सदा वदामि । ते यथोचितस्थाने एव स्थापनीयाः । गौरी गृहे सर्वत्र स्वच्छन्दं सञ्चरति । मम तु तस्याः विषये एव सन्देहः''

इति उक्तवती चतुर्थी स्नुषा ।

''मम तु भाति यत् राजकुमारेण सा सानन्दं नगरं गतवती यत् तत्र किमपि कुतन्त्रं स्यादपि इति । सा हारं चौर्येण नीत्वा मात्रे दातुम् इच्छन्ती एतत्सर्वं कृतवती स्यात्'' इति अवदत् ज्येष्ठा स्नुषा ।

रत्नावत्याः तु गौर्याम् अल्पः अपि सन्देहः न आसीत् । अन्येषु अपि सन्देहः न आसीत् तस्याः । अतः स्नुषाणां कथनं श्रुत्वा अपि सा सहमतिं निराकृतिं वा न दर्शितवती ।

मासद्वयम् अतीतम् । तथापि हारः केन चोरितः इति तु न ज्ञातम् । गौरी राजकुमारेण सह प्रत्यागतवती ।

तद्दिने सायं ज्येष्ठः पुत्रः सूर्यनारायणः शिवम् आहूय अवदत् - ''भवान् अस्मद्-गृहस्य सेवकः न, अपि तु ज्येष्ठः हितैषी इति अस्माकं सर्वेषां भावना । अतः अहं वदामि - भवता एतस्मिन् चौर्यप्रकरणे साहाय्यं करणीयम् इति । भवतः पत्नी अल्पवयस्का अस्ति । अतः अज्ञानात् दोषम् आचरितुम् अपि अर्हति । तां पृच्छतु - हारः कदाचित् स्वीकृतः किम् इति । स्वीकृतः चेत् सः कुत्र अस्ति इत्यपि पृच्छतु'' इति ।

शिवः रात्रौ पत्नीं पृष्टवान् । गौरी उत्तरं किमपि न उक्तवती ।

अनन्तरदिने उषसि एव रत्नावतीं दृष्ट्वा अश्रूणि स्रावयन्ती सा उक्तवती - ''अम्ब ! अहं भवतीं मातरं भावयामि । अतः एव अत्र सन्तोषेण कार्यं करोमि । चौर्यं तु अहं नाम्ना अपि न जानामि । भवत्याः नाम्ना शपे - हारः क्व गतः इति मया तु सर्वथा न ज्ञायते'' इति ।

रत्नावती तां सान्त्वयित्वा प्रेषितवती । हारः क्व गतः इति तु कथमपि न ज्ञातम् । रत्नावत्याः



चिन्ता दिने दिने वर्धते स्म ।

अत्रान्तरे ग्रीष्मकालः आगतः । एकदा शिवः सूर्यनारायणवर्यम् अवदत् - ''आर्य ! गृहस्य पृष्ठतः स्थिते कूपे जलं नास्ति । अतः इदानीम् एव तत्रत्यस्य पङ्कस्य निष्कासनं वरम् । किं तत् कार्यं कारयाणि ?'' इति ।

जलसमस्यां निवारयितुम् इच्छन् सूर्य-नारायणः स्वस्य अङ्गीकारं सूचितवान् । त्रिचतुराः कर्मकराः तस्मिन् कार्ये नियोजिताः शिवेन । गृहस्य सदस्याः सर्वे कूपसमीपे सम्मिलिताः । कर्मकराः कूपस्थं पङ्कं बहिः क्षिप्तवन्तः । तस्मिन् पङ्के चषकः, स्थालिका, क्रीडनकानि इत्यादीनि वस्तूनि प्राप्तानि । क्रीडनकं दृष्ट्वा पितामह्याः पार्श्वे स्थितः राजकुमारः सन्तोषेण अवदत् - ''एतत् क्रीडनकं मया एव कूपे क्षिप्तम् आसीत् । मदीयं मया पुनः प्राप्तम् । तत् आवश्यकं मह्यम्'' इति ।

''वत्स ! अन्यत् किं किं कूपे क्षिप्तं भवता ?'' इति प्रीत्या अपृच्छत् तदीया पितामही ।

''मया बहूनि वस्तूनि कूपे क्षिप्तानि सन्ति'' इति अवदत् राजकुमारः ।

पुनरपि पङ्कनिष्कासनं यदा कृतं तदा तत्र चन्द्रमत्याः हारः अपि प्राप्तः । सर्वैः गृह-सदस्यैः अवगतं यत् एतत् कार्यं राजकुमारेण एव कृतम् इति ।

'सर्वे भगिन्यां प्रीतिमन्तः सन्ति, मां सर्वे उपेक्षन्ते' इत्येषः भावः तस्य बालस्य मनसि उत्पन्नः आसीत् । अतः सः प्रतिपदं कोपं प्राप्नोति स्म । तदीयस्य कोपस्य कारणम् अवगन्तुं गृहसदस्येषु केनापि प्रयासः न कृतः आसीत् ।

तदीया पितामही तस्य शिरः प्रीत्या स्पृशन्ती - ''वत्स ! भवतः लघुकृत्यतः न जाने, कतिषु जनेषु केन केन सन्देहः कृतः इति'' इति उक्तवती ।

ततः सा पुत्रान् स्नुषाः च पश्यन्ती पुनः अवदत् - ''विना कारणं सर्वत्र सन्देहकरणं न उचितम् । कस्मिंश्चित् अपि सन्देहं कर्तुं कोऽपि आधारः न आसीत् इत्यतः अहं मौनेन आसम् अद्यावधि । इदानीं तु हारः प्रतिप्राप्तः अस्ति । अतः अस्थाने सन्देहः करणीयः नास्ति केनापि'' इति ।



# आन्तर्यम् अहिंसाप्रियतायाः...

सः प्रातिवार्षिकः उत्सवः भूस्वामिगृहे महता वैभवेन आचर्यते । कलाकारः काल्याः मृन्मयीं मूर्तिं निर्माय विशाले पूजागृहे स्थापयति । अर्चकः उच्चैः मन्त्रान् उच्चारयति । वाद्यवादकाः वाद्यानि वादयन्ति । शतशः जनाः विविधाभिः पूजाभिः भक्तिं दर्शयन्ति । दूरात् आगतान् बान्धवान् सुहृदः च मन्दहासपूर्वकं स्वागतीकरोति भूस्वामी चौधरी ।

बलिरूपेण अजानां समर्पणम् उत्सवस्य महत्त्वपूर्णम् अङ्गम् । बलिं द्रष्टुं न इच्छन्ति केचन । ते बलिसमये नेत्रे निमीलयन्ति । केचन रक्तात् भीताः । अतः ते बलिसमये ततः अन्यत्र गच्छन्ति । केचन तु बलिसमर्पणं दृष्ट्वा सन्तोषम् अनुभवन्ति अपि ।

एवं सन्तोषेण बलिसमर्पणं पश्यत्सु अन्यतमः अस्ति भूस्वामी चौधरी । तेन निमन्त्र्यमाणाः केचन अतिथयः अपि तादृशस्वभाववन्तः एव । बलिरूपेण समर्पितानाम् अजानां मांसेन सज्जीकृतं पाकं सन्तोषेण सेवन्ते ते । एतत् बलिसमर्पणं प्रतिवर्षं प्रचलति ।

कदाचित् भूस्वामी उद्घोषितवान् - ''एतस्मिन् वर्षे अजानां बलिः न प्रचलति । अग्रिमेषु वर्षेषु अपि तथैव'' इति ।

भूस्वामिनः एतं निर्णयं श्रुत्वा तदीयकार्यालयीयाः अधिकारिणः सुहृदः च नितराम् असन्तुष्टाः । 'आ बहोः कालात् अनुवर्तमाना





परम्परा कथं वा त्यक्तुं शक्येत ?' इति ते स्वगतम् उक्तवन्तः । स्वच्छन्दं मांसं खादितुं यत्र अवकाशः प्राप्यते स्म तादृशस्य उत्सवस्य आचरणस्य स्थगनं कथं वा सहेरन् ते ?

तेषु केचन भूस्वामिनः पत्नीं दृष्ट्वा उक्तवन्तः - ''अम्ब ! भवती दयामयी परम्परापालने जागरूका च । देवी प्रतिवर्षम् एकवारम् एव अस्मद्गृहम् आगच्छति । तदवसरे तस्यै यः आहारः प्रियः सः एव दातव्यः खलु अस्माभिः ? यदि सः न दीयेत तर्हि अस्मद्विषये किं वा चिन्तयेत् सा ? इतः स्वलोकं प्रतिगता सा अन्याः देवदेवताः उद्दिश्य किं वा वदेत् ?'' इति ।

तदा भूस्वामिनः पत्नी उक्तवती - ''वस्तुतः तु देव्याः पुरतः यदेतत् बलि-समर्पणं क्रियते तत् मम सर्वथा प्रियं न। भक्तिपरिसरं नाशयति एषा बलिः । अमानवीया एषा पद्धतिः स्थगिता जायमाना अस्ति इति सन्तोष्टव्यं खलु अस्माभिः ? आर्यस्य हृदये परिवर्तनं यत् जायमानम् अस्ति तत् सन्तोषाय एव । देव्याः पुरतः रक्तपातः न भविष्यति इतः परम् । सर्वं युक्तम् एव जातम्'' इति ।

किन्तु तां द्रष्टुं ये गताः ते महाबुद्धिमन्तः जनाः । अतः ते विविधैः उपायैः तर्कैः च भूस्वामिपत्नीम् उक्तवन्तः यत् परम्परा यथा अनुवर्तेत तथा भवत्या भूस्वामी बोधनीयः एव इति । अन्ते ते तस्याः अङ्गीकारस्य प्राप्तौ सफलाः जाताः अपि ।

तस्मिन् दिने सायं भूस्वामी सुखासने उपविश्य विश्रान्तिसुखम् अनुभवन् आसीत् । सेवकः कश्चन पादमर्दनं कुर्वन् आसीत् । तस्य समीपम् आगत्य उक्तवती तदीया पत्नी - ''पूजादिने यत् बलिसमर्पणं



आत्मनिग्रहः यदा साधितः भवति तदा सर्वे संशयाः अपगच्छन्ति । सः आत्मनिग्रही सत्यस्य सारं ज्ञात्वा परां शान्तिम् अधिगच्छति ।

*- श्रीमद्भागवतम्*

प्रचलति तत् पूजायाः प्रमुखम् अङ्गम् इति मन्यन्ते बहवः । भवतः प्रियाः सुहृदः अभिप्रयन्ति यत् देवी अपि एतत् अवश्यम् इच्छति इति । ...''

एतत् श्रुत्वा भूस्वामी आसनात् उत्थाय इतस्ततः सञ्चरन् अवदत् - ''मम सुहृदः ! मम प्रियाः सुहृदः ! धिक् तान् ! ते इव भवती अपि किं मयि अमानवीयं व्यवहारं कर्तुम् इच्छति ?'' इति ।

एतत् श्रुत्वा भूस्वामिपत्न्याः अन्तरङ्गे सन्तोषतरङ्गाः उत्पन्नाः । सा अचिन्तयत् - 'एषः बलिम् अमानवीयं भावयति । अतः स्पष्टं यत् अहिंसाविषये एतस्य श्रद्धा वर्धते इति । सन्तोषकरः विषयः एषः' इति ।

''अहम् भवति अमानवीयं व्यवहारं सर्वथा न इच्छामि'' इति अवदत् पत्नी ।

तदा भूस्वामी अल्पेन कोपेन अवदत् - ''किम् अमानवीयः व्यवहारः न क्रियते भवत्या ? सर्वम् एतत् असत्यम् । एषु दिनेषु अहं मांसं खादितुं न शक्नोमि इति किं न ज्ञायते ? गते वर्षे मम बहवः दन्ताः पतिताः । तथापि गतवर्षीये उत्सवे कथञ्चित् अहं मांसं खादितवान् । एतस्मिन् वर्षे मम सर्वे दन्ताः पतिताः सन्ति । दन्तैः विना मांसं कथं खाद्येत ? यदा मां परितः स्थिताः मांसं खादन्तः भवन्ति तदा कथं वा अहं शाकमात्रनिर्मितं खादन् उपविशेयम् ? एवं प्रचलतु इति भवत्याः इच्छा । किम् एषः अमानवीयः व्यवहारः न ?'' इति ।

पत्युः अहिंसाप्रियतायाः आन्तर्यं ज्ञावती भूस्वामिपत्नी मनसि एव हसन्ती मौनम् आश्रितवती ।








## चारु दर्शनाय

भारतस्य विनिमयद्रव्यम् अस्ति रूप्यकम् । तस्य नाम कथम् उत्पन्नम् इति विषयं किं भवन्तः जानन्ति ? आ बाबुरतः बहादुरशाझाफरपर्यन्तं यवनराज्यभारं नैरन्तर्येण न आसीत् । पञ्चदश वर्षाणि यावत् ते सिंहासने न आसन् । तस्मिन् एव समये देहल्याः चक्रवर्ती शेर्शासुरिः राजानं हुमायूनं भारतात् उच्चाटितवान् । स्वविजयस्य सङ्केतरूपेण तेन नाणकमेकं विमोचयितुम् इष्टम् । १५४२ तमे वर्षे १७८ ग्राम्भारमितं नाणकं टङ्कितम् । तादृशं नाणकमेकं नीत्वा यदा शेर्शासुरिमहाराजाय दर्शितं तदा तेन ससन्तोषम् उच्चारितम् - 'रूपय्य' इति । एतस्य पदस्य अर्थः आसीत् - 'सुन्दरम्' इति । तदेव नाम नाणकस्य नाम जातम् अग्रिमे काले ।

## कम्पमाने शिखरे !!

आधुनिकजगतः वैचित्र्येषु अन्यतमम् अस्ति इटलिदेशस्य लम्बमानं पीसागोपुरम् । तादृशम् एव गोपुरम् आसीत् भारते अपि । १४५४तमे वर्षे अहमद्शाहः अहमदाबादनगरे बीबीयप्रार्थनामन्दिरं निर्मितवान् । अस्य प्रार्थनामन्दिरस्य शिखरद्वयम् अस्ति, याभ्यां तस्य नगरस्य प्रसिद्धिः प्राप्ता अस्ति । ते शिखरे कम्पेते स्म । एकं शिखरम् अन्यस्य झूलास्तम्भस्य (झूला इत्यस्य अर्थः अस्ति - 'डोला' इति ।) उपरि लम्बते । तदा सः स्तम्भः कम्पते स्म । बृहदाकारकौ एतौ स्तम्भौ किमर्थं कम्पेते स्म इत्यस्य कारणं किमपि न ज्ञायते । 'स्म' इति भूतकालप्रयोगः कृतः यत् तस्य कारणम् अस्ति - २००१ तमे वर्षे प्रवृत्तः भूकम्पः । तस्मात् भूकम्पात् तौ स्तम्भौ भग्नौ जातौ स्तः । तौ न पतितौ इति तु अस्माकं सौभाग्यम् । भारतस्य पुरातन-वास्तुशास्त्रविभागतः तस्य समीकरणाय प्रयत्नः क्रियमाणः अस्ति ।





# सन्तोषस्य रहस्यम्

यमुनानद्याः निकटे कस्मिंश्चित् ग्रामे शान्ता-नामिका काचित् महिला निवसति स्म । मातापित्रोः एका एव पुत्री सा । तयोः मरणानन्तरं सर्वां सम्पदां सा प्राप्तवती । विशाला कृषिभूमिः, अनेकाः धेनवः, महत् भवनं, बहवः सेवकाः च तस्याः अधीनाः जाताः । सर्वान् व्यवहारान् सा एव निर्वहति स्म । कस्मिंश्चित् अपि तस्याः विश्वासः न आसीत् । अतः क्रमशः तस्याः मनः अशान्त्या भयेन च ग्रस्तम् अभवत् । लघुषु अपि विषयेषु सा अनावश्यकरूपेण आक्रोशं करोति स्म ।

एकदा तस्याः पतिः बलरामः तां बोधितवान् - ''पश्यतु शान्ते, भवत्याः महती सम्पत्तिः अस्ति । किन्तु कः लाभः तेन ? भवती सर्वदा अशान्ता एव तिष्ठति । लघुविषये अपि क्रुद्धा भवति । मनः प्रशान्तं न तिष्ठति चेत् सम्पदा किं प्रयोजनम् ? सर्वेषु कार्येषु सर्वे सर्वदा सफलाः भवन्ति इति नास्ति । कदाचित् वैफल्यम् अपि अनुभोक्तव्यं भवति । विफलता प्राप्ता चेत् किं नश्येत् ? तत् वैफल्यमेव जीवनस्य अनुभवं मत्वा अस्माभिः अग्रे गन्तव्यम् । कदाचिदपि मनश्शान्तिः नष्टा न भवेत् । धनात् अपि मूल्यवती भवति मनश्शान्तिः'' इति ।

पत्युः वचनानां विषये सा विशेषावधानं न दत्तवती । तद्दिने मध्याह्ने पतिः पत्नी च भोजनार्थम् उपविष्टवन्तौ । स्थालिकायां त्रिचतुरविधानि व्यञ्जनानि आसन् । रोटिकया सह आलुकस्य व्यञ्जनं मुखे स्थापयन्ती शान्ता झटिति तस्य निष्ठीवनं कृत्वा आक्रोशं कुर्वती - ''एषा निर्मला पाकार्थं दूषितम् आलुकमेव उपयुङ्क्ते सदापि । कार्यं तु सम्यक् न करोति । सम्भाषणमात्रे आसक्तिः एतस्याः'' इति उक्त्वा ततः निर्गन्तुम् उद्युक्ता ।

तदा बलरामः तस्याः सान्त्वनं कुर्वन् - ''इतोऽपि त्रिविधानि व्यञ्जनानि सन्ति एव खलु । सूपः अपि अस्ति । भवत्या इष्टं कारवेल्लव्यञ्जनम् अपि अस्ति । आर्द्रौ भोजनं



समाप्तं भवतु । अनन्तरं निर्मलां विचारयतु'' इति उक्तवान् ।

किन्तु शान्ता पत्युः वचनम् उपेक्ष्य उत्थाय हस्तं प्रक्षाल्य ततः निर्गतवती एव । किञ्चित्-कालानन्तरं बलरामः तस्याः प्रकोष्ठं गत्वा - ''शान्ते, अहं यत् वदामि तत् अवधान-पूर्वकं शृणोतु । इतः क्रोशमिते दूरे रमणपुरे शिवनामकः कश्चन वयोवृद्धः निवसति । तस्य वयः शताधिकम् अस्ति । अतः जनाः तं शतकशिवः इति नाम्ना निर्दिशन्ति । सः अशान्त्याः अनारोग्यस्य च चिकित्सार्थं परिष्कारमार्गं सूचयति इति श्रूयते । श्वः एव आवां तत्र गच्छाव'' इति उक्तवान् ।

सौभाग्यवशात् शान्ता पत्युः प्रस्तावस्य स्वीकृतिं सूचितवती । परेद्यवि तौ शिवेन मेलितुम् अश्वशकटेन प्रस्थितवन्तौ ।

शिवस्य विशाले प्रकोष्ठे पदं स्थापयन्ती शान्ता तं प्रणम्य स्वस्य परिचयम् उक्तवती - ''मम नाम शान्ता । मम अपारा सम्पत् अस्ति । बहवः सेवकाः दासाः च सन्ति । किन्तु ते मत्तः अधिकप्रसन्नाः सन्ति । अहमपि तादृशीं प्रसन्नताम् इच्छामि'' इति ।

वृद्धः शिवः नेत्रे निमील्य अवधानपूर्वकं तस्याः वचनं श्रुतवान् । अनन्तरं नेत्रे उन्मील्य मन्दहासपूर्वकं - ''भवत्याः प्रतिवेशिनीषु सदा प्रसन्ना कापि अस्ति चेत् ताम् अत्र आनयतु । तदा अहं भवत्यै आनन्दमयजीवनस्य रहस्यं बोधयामि'' इति ।

ततः तौ शिवं प्रणम्य गृहं प्रति प्रस्थितौ । मार्गे परस्परं हसन्त्यः सम्भाषमाणाः द्वित्राः महिलाः ताभ्यां दृष्टाः । शान्ता ताः अवरुध्य - ''भवतीनां कार्यं किम् ? भवत्यः सर्वदा सन्तोषेणैव तिष्ठन्ति किम् ?'' इति पृष्टवती ।

तदा तासु अन्यतमा उक्तवती - ''तथा किमपि नास्ति । अद्य वयं यथापूर्वं शाकस्य विक्रयणार्थं विपणिं गतवत्यः आस्म । शाकानां विक्रयणं शीघ्रम् अभवत् । अतः एव वयं सन्तोषेण स्मः । वर्षा भवति चेत् वयं गृहात् बहिः निर्गन्तुं न शक्नुमः । तद्दिने अस्माभिः बुभुक्षिताभिः एव भवितव्यम् । एवं स्थिते सर्वदा सन्तोषः कुतः ?'' इति ।

तासाम् उत्तरेण शान्तायाः निराशता जाता । पुनश्च अश्वशकटः एकेन लघुमार्गेण प्रस्थितः । एकत्र महान् सम्मर्दः आसीत् । तत्रत्याः जनाः 'मातः, गायत्रि' इति वदन्तः गीतगाने नृत्ये च निमग्नाः आसन् ।

शान्ता तान् उद्दिश्य - "का एषा गायत्री-माता नाम ?" इति पृष्टवती ।

तदा तेषु कश्चन भक्तः - "आम्र-वाटिकायाः कुटीरे गायत्रीमाता वसति । सा उत्तमा संन्यासिनी । सर्वदा हसन्ती भगवतः कथाः श्रावयन्ती भवति" इति उक्तवान् ।

शान्ता बलरामः च अश्वशकटात् अवतीर्य संन्यासिन्याः समीपम् आगतवन्तौ । शान्ता तां नमस्कृत्य पृष्टवती - "मातः, भवती नित्य-सन्तुष्टा अस्ति इति अस्माभिः श्रुतम् । भवती निश्चयेन सुखदुःखैः अपीडिता, रागादिभ्यः मुक्ता च स्यात् । एवं ननु ?" इति ।



तदा सा संन्यासिनी - "संन्यासिनी इति कारणतः कौटुम्बिकक्लेशेभ्यः मुक्ता अस्मि । नो चेत् न जाने, मम का गतिः अभविष्यत् इति । तथापि अहम् आत्मानं नित्यसन्तुष्टां तु न भावयामि" इति उक्तवती ।

तस्याः उत्तरेण पतिः पत्नी च आश्चर्य-चकितौ जातौ । संन्यासिनी तत् अवलोकितवती । अतः सा - "संन्यासस्वीकारानन्तरम् अहं निष्ठापूर्वकं योगविद्याः पठितवती । ततः मया अवगतं यत् पञ्चवर्षाभ्यन्तरे मम मरणं भविष्यति इति । यदा मृत्योः स्मरणं करोमि तदा भयं भवति । रात्रौ निद्रामपि न प्राप्नोमि" इति उक्त्वा अश्रूणि मार्जितवती ।

विना कथनं तौ ततः निर्गतवन्तौ । यदा तौ स्वग्रामस्य लघुमार्गेण गच्छन्तौ आस्तां तदा मन्दिरस्य पुरतः मन्दस्वरेण गीतं गायन्ती निश्चिन्ततया उपविष्टा पुष्पविक्रेत्री दृष्टा । सा तत्र आगतानां जनानां स्वागतं कुर्वती 'आगच्छन्तु, प्रत्यग्राणि पुष्पाणि ! महार्घाणि न" इति वदन्ती सन्तोषेण स्थितवती आसीत् ।

शान्ता शकटात् अवतीर्य किञ्चित्कालं तां पुष्पविक्रेत्रीं निर्निमेषं पश्यन्ती स्थितवती । अनन्तरं सा एकां मालां क्रीत्वा धनं यच्छन्ती - "भवत्याः वाणिज्यं तु लघु । तथापि भवती सदा सन्तुष्टा इव दृश्यते । किं भवती नित्यसन्तुष्टा ?" इति पृष्टवती ।

तदा सा पुष्पविक्रेत्री हसन्ती - "आम्, अहं सर्वदा सन्तुष्टा तिष्ठामि । मम जीवने कापि न्यूनता नास्ति खलु" इति उक्तवती ।

पुष्पविक्रेत्र्याः उत्तरेण सन्तुष्टा शान्ता तृप्त्या पत्युः मुखं दृष्टवती । बलरामः तां पुष्पविक्रेत्रीम् उक्तवान् - "पश्यतु, भवती शतकशिवस्य नाम श्रुतवती स्यात् । तस्य मेलनार्थं भवती अपि आवाभ्यां सह आगच्छतु इति आवयोः अपेक्षा अस्ति । कार्यसमाप्त्यनन्तरम् आवां

भवतीं शकटेन प्रतिप्रापयिष्यामः'' इति ।

पुष्पविक्रेत्री एतं प्रस्तावम् अङ्गीकृतवती । तस्याः तद्दिनस्य वाणिज्यं समाप्तप्रायम् आसीत् । किञ्चित्कालानन्तरं ते त्रयः शतक-शिवस्य समीपं गतवन्तः । शान्ता पुष्प-विक्रेत्र्याः विषयं शिवम् उक्तवती ।

वृद्धः शिवः पुष्पविक्रेत्रीं पृष्टवान् - ''किं भवती नित्यसन्तुष्टा अस्ति ?'' इति ।

पुष्पविक्रेत्री 'आम्' इति उत्तरम् उक्तवती ।

तदा शिवः - ''भवती तु पुष्पाणां विक्रयणं करोति । एतत् तु अत्यन्तं लघुवाणिज्यम् । एतेन कथं भवती सन्तुष्टा स्थातुं शक्नोति ?'' इति पृष्टवान् ।

तदा सा - ''मम वाणिज्यं तु लघु एव । किन्तु मम सन्तोषे एतेन कापि बाधा नास्ति । अस्माकम् एकर्मिता कृषियोग्या भूमिः अस्ति । अहं मम पत्या पुत्रैः च सह कुटीरे निवसामि । मम पतिः केदारेषु कार्यं कुर्वन् किञ्चित् आर्जयति । व्ययकरणावसरे अहं बहु जागरूकताम् आश्रयामि । पत्युः पुत्राणां च योगक्षेमं सम्यक् वहामि । आवश्यकतायां सत्याम् इतरेषां साहाय्यम् अपि करोमि । प्रभूतं धनं सम्पादनीयम् इति, महाजनेन भवितव्यम् इति वा मम अपेक्षा नास्ति । यावत् अस्ति तावता एव सन्तुष्टा तिष्ठामि'' इति उक्तवती ।

वृद्धः शिवः मन्दहासपूर्वकं शान्तां दृष्ट्वा - ''एतस्याः महिलायाः समीपे आभूषणानि धनं वा न सन्ति । भवत्याः समीपे तु अपारा सम्पत्, राशिरूपेण आभूषणानि च सन्ति । किन्तु भवत्याम् एतादृशस्य आनन्दस्य अभावः अस्ति । एतस्य कारणं किम् इति किं भवती जानाति ? भवती कस्मिंश्चिदपि न विश्वसिति । सर्वाणि कार्याणि स्वयं कर्तुम् इच्छति । इतोऽप्यधिकं सम्पादयितुम् इच्छति । अतः शक्तिम् अतिक्रम्य परिश्रमं करोति । मनुष्यस्य जीवने सम्पद् तु आवश्यकी एव । किन्तु सर्वासां सम्पदाम् अपेक्षया मनश्शान्तिः एव श्रेष्ठा सम्पत् । अस्माकं चिन्तनमेव अस्माकं सुखदुःखयोः कारणं भवति । पुष्पविक्रेत्र्या स्वस्य नित्यसन्तोषस्य यत् कारणम् उक्तं तत् सम्यक् स्मरतु । भवत्याः समस्या स्वयं परिहृता भविष्यति'' इति उक्तवान् ।

शान्ता इदानीं मनसा शान्ता अभवत् । पतिः पत्नी च शिवं प्रणम्य पुष्पविक्रेत्रीं स्वीकृत्य प्रतिगतवन्तौ ।



## घण्टासङ्ग्रहः ताम्बूलापणे



मुम्बयीनगरे विनोदकुमारत्रिवेदी एकं ताम्बूलापणं स्थापितवान् अस्ति । तस्य नाम अस्ति - 'घण्टावाला-ताम्बूलमन्दिरम्' इति । 'घण्टावाला' इत्यस्य अर्थः अस्ति - 'घण्टया सहिता' इति । परम् अस्माकं स्नेहितस्य एतस्य समीपे न एका, अपि तु १८ देशेभ्यः आनीताः ३९३ घण्टाः वर्तन्ते । ताः सर्वाः प्रदर्शनाय स्थापिताः सन्ति अस्मिन् आपणे । न केवलं तावत्, यदा सः ग्राहकाय ताम्बूलं सिद्धं कृत्वा ददाति, यदा च ग्राहकः धनं ददाति तदा एषः घण्टां वादयति !! सः स्वस्य पितामहेन आरब्धां परम्पराम् अनुसरन् अस्ति । पितामहः तु १९३३तमे वर्षे पूनानगरे आपणं स्थापितवान् आसीत् । यदा ग्राहकः प्रतिष्ठते तदा द्विवारं घण्टा वाद्यते स्म तेन । टिबेटीया काष्ठघण्टा, भारतदेशीया २० किलोग्राम्मिता पित्तलघण्टा इत्यादयः विराजन्ते अत्र । एतस्मात् घण्टासङ्ग्रहणात् तस्य नाम गिन्नेस्पुस्तके योजितम् अस्ति ।

## कनीयान् 'कृष्णपट्टिका' विजेता

ब्राण्डन्पाल्फर्नाण्डिस् पुणेनगरस्थः १२ वर्षीयः बालः । 'टेक्वण्डो अकाडेमी आफ् सियोल्'संस्थाद्वारा दक्षिणकोरियादेशस्य टेक्वण्डोप्रदेशे प्रवृत्ते फोर्तपूम् ब्ल्याक् बेल्ट्कार्यक्रमे प्राप्तब्ल्याक्बेल्ट्पुरस्कारः जातः अस्ति एषः । स्पर्धार्थिषु बहवः कोरियादेशीयाः एव आसन् । एषः एकः एव भारतस्य प्रतिनिधिरूपेण तत्र गतः आसीत् । स्पर्धाः नवेम्बर्मासस्य १५तः डिसेम्बर्मासस्य २ पर्यन्तं प्रवृत्ताः । तदा सियोल्देशे परमशैत्यम् आसीत् । पुणेप्रदेशीयस्य एतस्य बालकस्य एषः नूतनः अनुभवः आसीत् । फलितांशाः तु अधिकृत-रूपेण एप्रिल्मासे एव प्रकटिताः । एतस्य बालस्य शिक्षणं तु प्रथमवर्षे एव आरब्धम् आसीत् ।



# ओरिस्साराज्यस्य जानपदकथा

ओरिस्साराज्यस्य पूर्वतनं नाम आसीत् 'उत्कलम्' इति । पूर्वं कलिङ्गराजाः एतस्य राज्यस्य शासनं कुर्वन्ति स्म । अतः कलिङ्गम् इत्यपि एतस्य नाम आसीत् ।

सहस्राधिकवर्षेभ्यः पूर्वम् अत्रत्याः जनाः इण्डोनेशियाद्वीपेषु, मलयाप्रभृतिषु च वाणिज्यं कुर्वन्ति स्म । तेषु द्वीपेषु तेषां राज्यशासनम् अपि प्रचलति स्म । सुमात्राद्वीपादिषु साम्राज्यं संस्थापितवान् शैलेन्द्रः वस्तुतः उत्कलमूलीयः एव ।

आंग्लानां शासनकाले बहूनि वर्षाणि यावत् एतत् राज्यं बिहारेण संयुक्तम् आसीत् । १९३६तमे वर्षे एतत् पुनरपि पार्थक्येन राज्यत्वम् अवाप्नोत् । अद्य एतस्य राज्यस्य जनसंख्या प्रायः चतुष्कोटिमिता । एतस्य विस्तारः च १,५५,७०२ किलोमीटर्मितः ।

एतस्य उत्तरभागे बिहारराज्यम् अस्ति । ईशान्यभागे च पश्चिमवङ्गसीमा परिदृश्यते । आग्नेयभागे आन्ध्रप्रदेशः समस्ति । पश्चिमभागे मध्यप्रदेशः अस्ति । पूर्वसीमाभागं बङ्गालखातस्थं जलं परिक्षालयति ।

एतस्य राजधानी भुवनेश्वरम् । तत् अतिप्राचीनं नगरम् । एतस्मिन् राज्ये अतिप्राचीनानि बहूनि मन्दिराणि अपि सन्ति ।

## आढ्यः राजा अल्पः जीवी च

कलिङ्गसाम्राज्यस्य कस्मिंश्चित् राज्ये कश्चित् युवा राजा आसीत् । सः अतीवप्रशंसाप्रियः । तस्य राज्ये मधुरवचनैः प्रशंसां कुर्वतां जनानां न्यूनता एव न आसीत् ।

एकदा राजा राजसभाम् आगतवान् । तदा कश्चित् कविः राज्ञः गुणान् श्लोकैः प्रशंसितवान् । श्लोकस्य तात्पर्यम् एवम् आसीत् – 'एतस्य राज्ञः पुरतः आत्मप्रशंसां कर्तुं समर्थः जगति कोऽपि नास्ति । तादृशः कथं वा स्यात् ? यतः राज्ञः अपेक्षया सुन्दरतरः,



शीलवान्, शक्तिमान्, धनवान् वा अन्यः न अस्ति एव' इति ।

यद्यपि एषा अतिशयोक्तिः, तथापि सभासदः कवेः प्रोत्साहनं कृतवन्तः । केचन तु 'अहो, सत्यम्, सत्यम्' इति उच्चैः उक्तवन्तः ।

किन्तु यदा जनानाम् उद्घोषाः करताडनानि च स्थगितानि तदा कश्चित् उच्चैः हसितवान् । सः आसीत् ज्ञानेन वयसा च वृद्धः कश्चित् मन्त्री ।

''किम् अभवत् ? किमर्थं हसितं भवता ?'' इति तम् आश्चर्येण पृष्टवन्तः सभासदः ।

तदा सः - ''हासस्य कारणं तु सामान्यम् एव । तथापि अहम् उद्गतं हासम् अवरोद्धुं न शक्तवान् । यतः यदि कश्चित् अल्पं विषयम् अधिकृत्य आत्मप्रशंसां कुर्वन् भवति तर्हि तं यः कोऽपि, अवरोद्धुं न शक्नोति । राजा अपि न शक्नोति । वानरः स्वस्य लाङ्गूलविषये प्रशंसां कर्तुम् अर्हति; गृध्रः स्वचञ्च्वाः प्रशंसां कुर्यात् । कथं तान् अवरोद्धुं शक्नुयाम वयम् ?'' इति उक्तवान् ।

राजा इतरे सभासदः च 'एतस्य चिन्तनं दोषपूर्णम्' इति निरूपयितुं न शक्ताः । किन्तु राजा मन्त्रिणः एतेन वचनेन असमाधानं तु प्राप्तवान् ।

एकदा राजा उद्याने सन्तोषेण विहरन् आसीत् । तदा एकः चिक्रोडः तत्र आगतः । तेन चिक्रोडेन कुत्रचित् एकं नाणकं प्राप्तम् आसीत् । हस्ताभ्यां तत् नाणकं गृहीत्वा सः चिक्रोडः -



*''मदीयं धनमेतावत्*
*राज्ञः स्याद्धि कियद्धनम् ?*
*स दृश्यते दुःखितवत्*
*यतः सोऽस्ति हि निर्धनः ।।''*

इति गायति स्म ।

एतत् श्रुत्वा राजा क्रुद्धः अभवत् । सः एकं शिलाखण्डम् उन्नीय चिक्रोडस्य दिशि क्षिप्तवान् । सः चिक्रोडः कथञ्चित् आत्मानं रक्षन् ततः पलायनं कृतवान् । किन्तु तस्य धावनसमये तदीयं नाणकं तत्रैव पतितम् । राजा तत् नाणकम् उन्नीय हसित्वा कोषे स्थापितवान् ।

तस्मिन् एव काले कलिङ्गस्य वणिजः दीर्घवाणिज्यार्थं सुवर्णद्वीपं प्रति प्रस्थितवन्तः आसन् । सुमात्राद्वीपं प्रति नौका प्रस्थिता आसीत् । राजा वणिजाम् अप्रच्छनार्थं महानद्याः तीरम् आगतवान् आसीत् । वाणिज्य-



# कलाः कलाकृतयः च



भारतस्य शास्त्रीयनृत्येषु 'ओडिस्सी'नृत्यमपि अन्यतमम् । ओरिस्साराज्यस्य मन्दिरेषु एतत् नृत्यं विकसितम् । करकुशलकर्मसु ओरिस्साराज्यं नितरां प्रसिद्धं वर्तते । अत्रत्यकुशलकर्मसु अत्यन्तं प्रधानं 'फिलिग्री'नामकम् । धूमवर्तिकानाम् आभूषणानां च पेटिकाः, कण्डोलाः, आलङ्कारिकवस्तूनि आलङ्कारिकाधानिकाः इत्यादयः सूक्ष्मविन्यासैः रजतेन निर्मीयन्ते अत्र ।

पट्टचित्रनामिका ग्रामीणचित्रकला बहुभ्यः वर्षेभ्यः विशिष्टकलाकृतिरूपेण ओरिस्साराज्ये प्रसिद्धा अस्ति । अत्र प्राणिनां, पुष्पाणां, देवतानां च चित्राणि विशेषरूपेण सर्ज्जीकृते पटे लिख्यते ।

पिपलीनामिका अपरा चित्रकला एतस्य राज्यस्य विशिष्टम् आकर्षणम् अस्ति । अत्र विविधाकारकाः वर्णमयवस्त्रखण्डाः योज्यन्ते । विशिष्य पुष्पाणां, पक्षिणां, प्राणिनां च आकाराः कलात्मकरूपेण वस्त्रस्योपरि चित्र्यन्ते ।

नौकायाः स्वामिद्वारा सुमात्राराजाय उपायन-रूपेण कलिङ्गस्य प्रसिद्धां *'तराकसी'*-कलाकृतिं महाराजः प्रेषितवान् ।

नौकास्वामिना सह यदा महाराजः सम्भाष-माणः आसीत् तदा नौकायाः उपरि चिक्रोडः दृष्टः । सः महाराजम् उपहसन् –

*''योऽहरद् मम सम्पतिं*

*स दर्शयति चाढ्यताम्''* इति नृत्यन् इव उक्तवान् ।

यद्यपि राजा क्रोधतप्तः अभवत् तथापि सः सर्वेषां पुरतः स्वस्य क्रोधं प्रदर्शयितुम् अशक्तः सन् दन्तान् कटकटायमानः मौनम् आश्रितवान् । तद्दिने सायङ्काले अपि यदा राजा केनचित् विदेशीयराजदूतेन सह वार्तालापं कुर्वन् आसीत् तदा चिक्रोडः आगत्य तदेव वाक्यं पुनरुच्चारितवान् । एतस्मात् राजा खिन्नः अभवत् । रात्रौ सः क्षणकालम् अपि निद्रां प्राप्तुं न शक्तवान् ।

प्रातः उत्थाय सः स्वस्य वृद्धं मन्त्रिणम् उद्दिश्य – ''भवान् निश्चयेन बहु बुद्धिमान् । अहं सामान्यं चिक्रोडम् अपि प्रशंसाकरणात् अवरोद्धुं न शक्तवान् । एवं तर्हि मनुष्याणां विषये किं वक्तव्यं भवेत् ?'' इति खेदेन उक्तवान् ।

तदा सः मन्त्री – ''महाप्रभो, भवतः कथनं सत्यमेव । प्रत्येकं जनः अपि स्वस्य चिन्तनानुसारं व्यवहरति । ते एव भाग्य-शालिनः, ये च लोकज्ञानवन्तः सन्तः एतादृशान् अवगतवन्तः । किन्तु एतादृशानां संख्या विरला एव'' इति उक्तवान् ।

तदा राजा – ''तर्हि मया इदानीं किं करणीयम् ? सर्वेषां पुरतः चिक्रोडः मां चोरः

इति यत् वदति तत् मम हृदये तीव्रां वेदनां जनयति'' इति खेदेन उक्तवान् ।

तदा मन्त्री - ''मम कथने यदि भवतः आदरः तर्हि तत् नाणकं चिक्रोडाय प्रत्यर्पयतु'' इति उक्तवान् ।

अनन्तरदिने यदा चिक्रोडः राज्ञः पुरतः उपस्थितः तदा एव राजा तत् नाणकं तस्य पुरतः क्षिप्त्वा ततः निर्गतवान् । चिक्रोडः नाणकं स्वीकृत्य धावितवान् ।

राजा समाधानपूर्वकं निश्श्वसितवान् । किन्तु विषयः तत्र न समाप्तः । परेद्यवि चिक्रोडः राजसभाम् आगत्य रिक्तस्थानम् अन्विष्य उपविष्टवान् । तत्र उपविश्य उच्चैः -

*''मत्तो भीतेन राज्ञा हि*
*मद्वस्तु प्रत्यदीयत''* इति उक्तवान् ।

एतावत् उक्त्वा चिक्रोडः आत्मानं रक्षन् उत्प्लुत्य उद्यानं प्रति पलायितवान् ।

राजा पुनरपि दुःखितः अभवत् । चिक्रोडः



पुनः पुनः तत् वाक्यम् उच्चारयेत् एव इति राज्ञा ज्ञातम् आसीत् । मम मनश्शान्तिः नष्टा इत्येव सः भावितवान् ।

सभायाः समाप्तेः अनन्तरं यदा राजा एकाकी आसीत् तदा मन्त्री आगत्य - ''प्रभो, भवान् चिक्रोडं दृष्ट्वा हसतु । भवत्तः अहं भीतः अस्मि इत्येव तं वदतु । अनन्तरं किं भवति इति पश्यतु'' इति उक्तवान् ।

परेद्यवि यदा चिक्रोडः राजसभायां प्रत्यक्षः अभवत् तदा राजा अवदत् -

*''चिक्रोड ! त्वं महाप्राज्ञः*
*कोऽन्यः स्यात् सदृशस्तव ।*
*राजाहमस्मि सामान्यः*
*दयापात्रं भवामि ते''* इति ।

चिक्रोडेन एतत् निरीक्षितं न आसीत् । सः क्षणं यावत् मौनेन उपविष्टवान् । अनन्तरं आनन्देन नृत्यन् उद्यानं प्रति धावितवान् । पुनः कदापि सः राज्ञः पुरतः न आगतवान् एव ।

एतत्सर्वं ज्ञात्वा मन्त्री उक्तवान् - ''प्रभो, प्रायः मनुष्याः अपि एतस्मात् भिन्नाः न । मन्दप्रकाशे जगति आत्मना यत् दृष्टं भवति तस्यैव व्याख्यानं कुर्वन्तः भवन्ति ते । तैः सह यदि वयं संयमेन व्यवहरेम तर्हि दुःखं खेदं वा न अनुभवेम'' इति ।

तदा राजा - ''निश्चयेन एतत् सत्यम् । अहं मूर्खः आसम् । यः कोऽपि मम पुरतः आगत्य किमपि वदन् आत्मप्रशंसां कुर्यात् । तदा मया संयमेन विनयेन च व्यवहरणीयम्'' इति उक्त्वा वृद्धाय मन्त्रिणे धन्यवादान् समर्पितवान् ।



# नौकद्वये पदनिक्षेपः

रविवर्मा भुवनगिरिराज्यस्य राजा ।भुवनगिरौ रङ्गनाथः नाम कश्चन वैद्यः निवसति स्म । सः चित्रकलायाम् अपि सुनिपुणः आसीत् । सकृत् दृष्टस्यापि जनस्य यथावत् चित्रं लिखति स्म आयासं विना एव ।

कदाचित् मध्यरात्रे कौचित् तस्य गृहस्य द्वारं ताडितवन्तौ ।

रङ्गनाथः द्वारम् उद्घाट्य अपृच्छत् - ''कौ भवन्तौ ?'' इति ।

तदा तयोः अन्यतरः अवदत् - ''आवां पार्श्वग्रामवासिनौ । वाणिज्यार्थं नगरं गतवन्तौ आस्व । प्रत्यागमनसमये चोराः सर्वं लुण्ठितवन्तः । अन्धकारे एव प्रत्यागच्छन्तौ आस्व । एषः मार्गे कस्यचित् शुनकस्य पुच्छस्य उपरि पादं स्थापितवान् । तस्मात् क्रुद्धः शुनकः एतस्य पादं दष्टवान् । भवान् उत्तमः वैद्यः इति आवां जानीवः । अतः चिकित्सार्थम् अत्र आगतौ । कृपया एतस्य चिकित्सां करोतु'' इति ।

अपरस्य जानुनः अधोभागतः वस्तुतः अपि रक्तं वहति स्म । रङ्गनाथः रक्तस्थगनाय औषधं लेपयित्वा पट्टिकां बद्धवान् । कृतज्ञतां समर्प्य उभौ अपि ततः निर्गतवन्तौ ।

चिकित्सां कुर्वन् रङ्गनाथः तयोः मुखम् अपि सम्यक् परिशीलितवान् आसीत् एव । तयोः मुखे भीतिलक्षणानि स्फुटं दृश्यन्ते स्म । 'मध्यरात्रे आगतौ एतौ चोरौ अपि स्याताम्' इति अचिन्तयत् सः । अतः तयोः निर्गमनसमनन्तरम् एव सः तयोः चित्रस्य लेखने उद्युक्तः जातः ।

अनन्तरदिने सैनिकानां घोषणतः ज्ञातं यत् राज्ञः रविवर्मणः हननार्थं प्रयासः प्रचलति स्म इति । मध्यरात्रे उभौ चोरौ राज्ञः शयनागारं प्रविष्टवन्तौ आस्ताम् । किन्तु सैनिकाः जागरूकाः सन्तः तयोः ग्रहणाय यदा प्रयासं कृतवन्तः तदा तौ झटिति पलायितवन्तौ ।

सैनिकाः केचन धावन्तः तौ अनुसृतवन्तः अपि । किन्तु गाढे अन्धकारे कुत्रापि अदृश्यौ

जातौ आस्तां तौ कथमपि ।

'मम सन्देहः वास्तविकः एव जातः' इति चिन्तयन् रङ्गनाथः नगराधिपतिसमीपं गत्वा रात्रौ प्रवृत्तं सर्वं निवेद्य आत्मना रचितं चित्रं दर्शितवान् । चित्रस्य आधारेण तौ चोरौ सैनिकैः गृहीतौ ।

राजा तयोः शिरच्छेदम् आदिष्टवान् । रङ्गनाथस्य सत्कारः अपि तेन कृतः ।

रङ्गनाथेन यत् चित्रं रचितं तदाधारेण एव चोरयोः ग्रहणं कर्तुं शक्तं यत् तदर्थं तदीया चित्ररचनाकला अपि जनैः भूरि प्रशंसिता जाता ।



एतस्य कारणतः राज्ये रङ्गनाथस्य नाम प्रसृतं जातम् । अतः चित्रकलायां रङ्गनाथस्य आसक्तिः प्रवृद्धा । अतः सः चित्ररचनार्थम् एव स्वस्य समययापनम् आरब्धवान् । वैद्यवृत्तौ तस्य आसक्तिः क्षीणा जाता । कदाचित् सः रोगिणां विषये अनादरम् अपि दर्शयति स्म । अतः तद्विषये स्थिता जनानां श्रद्धा न्यूना जाता । तस्मात् जनाः चिकित्सार्थं तत्समीपम् आगमनम् एव न्यूनीकृतवन्तः । एतेन रङ्गनाथस्य आयः दिने दिने क्षीणः जातः । रङ्गनाथः अकिञ्चनः जातः इव ।

एतेषु एव दिनेषु प्रतिवेशिराज्येषु क्षामः उत्पन्नः । भुवनगिरिराज्ये तु काचित् नदी प्रवहति स्म । अतः भुवनगिरिराज्यीयाः क्षामकाले अपि सुमहत् कष्टं तु न अनुभूतवन्तः अन्यराज्येषु इव । तस्मात् प्रतिवेशिराज्यीयाः वासार्थं भुवनगिरिराज्यम् आगतवन्तः बहवः ।

एवम् आगतवत्सु विश्वकेतुनामकः मध्यवयस्कः वैद्यः अपि अन्यतमः । सः पूर्वं कदाचित् रङ्गनाथेन मिलितवान् आसीत् अपि । रङ्गनाथः उत्तमः वैद्यः इति सः जानाति स्म । चित्रकलापिशाचेन आविष्टस्य तस्य समीपं जनाः आधिक्येन गच्छन्तः न सन्ति इत्यपि तेन ज्ञातम् आसीत् ।

सः नगरात् बहिः एकं विशालं गृहं भाटकरूपेण स्वीकृत्य वसन् तत्रैव वैद्यवृत्तिम् अपि आरब्धवान् । रङ्गनाथस्य व्यवहारात् खिन्नाः जनाः बहवः चिकित्सार्थं तत्समीपम् आगतवन्तः ।

यावत् सम्पादितम् आसीत् तत्सर्वं यदा समाप्तम् अभवत् तदा रङ्गनाथः अहरहः उदरपूरणाय अपि क्लेशं सम्मुखीकृतवान् । एतस्याः समस्यायाः निवारणार्थं किं करणीयम्



इति न ज्ञातं तेन । एतद्विषये परामर्शार्थं सः पार्श्वस्थे ग्रामे निवसतः मातुलस्य गृहं प्रति प्रस्थितवान् ।

यदा नगरम् आतिक्रान्तं तदा तेन एकं विशालं गृहं दृष्टम् । एतावता सः विश्वकेतोः विषये श्रुतवान् आसीत् एव । अतः एतत् वैद्यस्य विश्वकेतोः गृहम् इति दर्शनमात्रेण एव अवगतवान् सः ।

तत्समये गृहस्य पुरतः उपविश्य सप्त-तन्त्रीकां वीणां वादयन् आसीत् विश्वकेतुः । दूरादेव सः वैद्यस्य रङ्गनाथस्य आगमनं दृष्ट्वा ससम्भ्रमम् उत्थाय – ''आर्य ! अहो, भवान् अत्र ! अहो, मम सौभाग्यम् !'' इति वदन् विनयेन प्रणम्य स्वागतीकृत्य उपवेशनाय आसनादिकं परिकल्पितवान् ।

विश्रामादीनाम् अनन्तरं सः रङ्गनाथम् अवदत् – ''महाशय ! अहं भवन्तम् अभि-जानामि । मम नाम विश्वकेतुः इति । किन्तु प्रायः भवान् मां न जानाति । अस्माकं राज्ये क्षामः उत्पन्नः इत्यतः अहम् अत्र आगत्य वसामि'' इति ।

रङ्गनाथः तस्य आदरसत्कारादिकं प्राप्य सन्तुष्टः सन् अवदत् – ''भवान् उत्तमतया सप्ततन्त्रीकां वीणां वादयति'' इति ।

तदा विश्वकेतुः हसन् अवदत् – ''आ बाल्यात् एतस्याः वादने रुचिः मम । वृत्त्या वैद्यः अहं पूर्वं वृत्तिबलात् प्रभूतं धनं सम्पादितवान् आसम् । तस्मिन् एव काले उत्तमसप्ततन्त्रीकवादकत्वेनापि मया प्रसिद्धिः प्राप्ता । मया राजपुरस्कारः अपि प्राप्तः ।

तस्मात् वाद्यवादने एव मम रुचिः प्रवृद्धा । वैद्यवृत्तौ आसक्तिः न्यूना जाता । गच्छता कालेन जनाः मत्समीपम् आगमनं न्यूनीकृतवन्तः । तस्मात् मम आयः न्यूनः जातः । तदा मया अवगतं यत् वाद्ये अभिरुचिः उदरपूरणाय न भवति इति । किन्तु एतत् यावत् मया ज्ञातं तावता कालः अतीतः आसीत्'' इति ।

''एतदनन्तरं किं कृतं भवता ?'' इति कुतूहलेन पृष्टवान् रङ्गनाथः ।

''जीवननिर्वाहाय आसीत् एका वृत्तिः । आत्मतृप्तये आसीत् अन्या प्रवृत्तिः । किन्तु मया आत्मतृप्तये या आसीत् तस्याः एव श्रेष्ठता भाविता । अतः मया कष्टगर्ते पतितम् । अनन्तरं मया अत्र आगतम् । अत्र जनाः मां न जानन्ति स्म । अतः वैद्यवृत्तौ विश्वासं कुर्वन् इदानीं सुखेन जीवामि । तथापि आत्मतृप्तये कदाचित् वाद्यं वादयन् भवामि'' इति अवदत् विश्वकेतुः ।

विश्वकेतोः कथा रङ्गनाथस्य कथा इव एव आसीत् । अतः रङ्गनाथः क्षणकालस्य मौनस्य अनन्तरम् अवदत् - ''भवान् वयसा मत्तः अपि कनिष्ठः । तथापि भवता महान् जीवनानुभवः प्राप्तः अस्ति । अतः भवान् आत्मना कृतं लोपं समीकर्तुं शक्तवान् । नौकाद्वये पदनिक्षेपः विपदः हेतुः । नौकद्वये पदनिक्षेपात् यात्रा तु न प्रवर्तते, अपायः अपि भविष्यति । मया अपि एतादृशः दोषः कृतः । तस्य फलम् अनुभवन् अस्मि इदानीम् । भवान् इव अहम् अपि यदि अन्यत् राज्यं गत्वा वैद्यवृत्तिं करिष्यामि तर्हि एव वरं स्यात् इति भावयामि अहम्'' इति ।

''उत्तमवैद्यत्वेन भवान् पूर्वं ख्यातः आसीत् एव । इदानीं माम् अपि जनाः उत्तमवैद्यत्वेन परिगणयन्तः सन्ति । यदि आवां मिलित्वा वैद्यवृत्तिं कुर्याव तर्हि जीवननिर्वाहे कोऽपि क्लेशः न भवेत् । भवता ग्रामस्य परित्यागः करणीयः अपि न भवेत्'' इति अवदत् विश्वकेतुः ।

विश्वकेतोः एषः प्रस्तावः रङ्गनाथाय अपि अरोचत । ततः उभौ अपि मिलित्वा वैद्यवृत्तिम् आरब्धवन्तौ । अल्पे एव काले ताभ्यां जनादरः प्राप्तः । तस्मात् उभयोः अपि जीवनं सुखमयं जातम् ।



# भारतम् अवगम्यताम्

१. मकरसङ्क्रान्तिः विविधेषु प्रदेशेषु विभिन्नैः प्रकारैः आचर्यते । क्रमं स्थलं च यथायोग्यं योजयत ।

अ) वाताटोड्डयनम्    १. तमिळुनाडु
आ) नवतण्डुलपाकः    २. केरलम्
इ) पर्वतस्थं मन्दिरं प्रति गमनम्    ३. गुजरात्

२. कश्चन राजा प्रतिवर्षं दश दिनानि स्वराज्यं प्रति आगच्छति देशदर्शन-कुतूहलेन इति वदति पुराणम् । तस्य राज्ञः नाम किम् ?

अ. युधिष्ठिरः
आ. रामचन्द्रः
इ. महबली



३. एषः राष्ट्रभक्तः कस्यचित् पर्वणः आचरणे नावीन्यं कल्पितवान्, तन्नाम तत्र राष्ट्रभक्त्यंशम् अपि योजितवान् । सः राष्ट्रनायकः कः ? तस्य पर्वणः नाम च किम् ?

४. अत्र चित्रे सर्वे आनन्दसागरे निमग्नाः दृश्यन्ते । किन्तु चित्रेऽस्मिन् असहजांशः कश्चन दृश्यते । सः कः ?



५. प्रवादिनः मोहम्मदस्य पुत्रस्य हुतात्मता-दिनं किञ्चित् आचर्यते । तद्दिनं किम् ?

अ. रमझान्
आ. इद्-उल्-झुहा
इ. इद्-उल्-फर्

*(उत्तराणि अग्रिमे मासे)*

### 'जुलै' मासस्य प्रश्नानाम् उत्तराणि

*१. बृहस्पतिः ।*
*२. आर्यभटः ।*
*३. कृपिणा ।*
*४. मदनमोहनमालवीयः । बनारस्-हिन्दुविश्वविद्यालयः ।*
*५. रूर्केविश्वविद्यालयः ।*
*६. डा॰ एल्.के. अनन्तकृष्ण-अय्यर् ।*



# विघ्नेश्वरः

गजाननपण्डितस्य गृहे कामधेनुसदृशी दुग्धदात्री धेनुः आसीत् । नन्दः नाम युवकः तस्यै तृणजलादिकं ददाति, गजाननपण्डिताय उत्तमं क्षीरं ददाति च । कदाचित् स्वरकेसरी मधुरैः वचनैः वशीकृत्य तं स्वस्य उपायं सूचितवान् ।

गणपतिनवरात्रोत्सवावसरे गजाननपण्डितस्य पत्नी पुत्र्या, जामात्रा, दौहित्रेण च सह कल्याणीनगरं गतवती । तेषां प्रत्यागमनसमये विलम्बः जातः ।

गजाननपण्डितस्य सङ्गीतं श्रोतुम् इच्छन्तः जनाः दूरस्थेभ्यः अपि ग्रामेभ्यः वातापिनगरं प्रति आगतवन्तः ।

यस्मिन् दिने उत्सवस्य आरम्भः भवेत् तस्मिन् दिने गजाननपण्डितस्य सङ्गीतकार्यक्रमस्यापि आरम्भः । तद्दिने नन्दः उषसि एव उत्थाय स्वरकेसरिणः कथनानुगुणं जलयुक्ते चषके सद्योदुग्धं क्षीरं स्थापयित्वा तं चषकं गजाननपण्डिताय दत्तवान् ।

गजाननपण्डितः दर्शनमात्रेण एव क्षीरे जलांशम् अभिज्ञाय नन्दम् अपृच्छत् - ''नन्द ! किमेतत् ? क्षीरे जलमिश्रणं दृश्यते ! ऐदम्प्राथम्येन भवता एवं क्रियमाणं पश्यामि अहम्'' इति ।

तदा नन्दः अवदत् - ''श्रीमन् ! अहं गणेशनाम्ना शपे यत् मया दुग्धे जलं न मिश्रितम् इति'' इति ।

गजाननपण्डितस्य पुरतः नन्दः सदापि विनयेन व्यवहरति स्म । एतस्मिन् दिने तु सः उच्चस्वरेण वदन् क्रोधं प्रकटितवान् । तदीयम् उच्चं स्वरं श्रुत्वा मार्गे गच्छन्तः जनाः द्वारसमीपे सम्मिलिताः । कार्यान्तरव्याजम् अभिनयन्



स्वरकेसरी अपि तत्र सम्प्राप्तः । मनसि एव आनन्दम् अनुभवन् सः तत्र स्थितवान् ।

शपथं कर्तुम् अपि उत्सहमानं नन्दम् उद्दिश्य अवदत् गजाननपण्डितः – ''नन्द ! गणेश-नाम्ना शपे इत्यपि उक्तं खलु भवता ? तर्हि तथैव करोतु'' इति ।

यदा शपथः करणीयः एव अभवत् तदा नन्दः असहायकतया परितः दृष्टिं प्रसारितवान् । तदा गजाननपण्डितः क्रोधेन अवदत् – ''किम् इतस्ततः दर्शनेन ? शपथं करोतु तावत्'' इति ।

गजाननपण्डितस्य कथनं श्रुत्वा नन्दः नितरां भीतः । तदा दूरे स्थित्वा सर्वं दृष्टवान् स्वरकेसरी अग्रे आगत्य न्यायनिर्णयं कुर्वन् इव व्यवहरन् – ''अये, उक्तं वचनं पालनीयम् एव । यत् उक्तं तदेव देवस्य पुरतः पुनः उच्चार्य दीपं निर्वापयतु । तत्र का भीतिः भवतः ?'' इति अवदत् । एतावत् उक्त्वा सः नेत्रसङ्केतेन तस्मिन् धैर्यं पूरितवान् ।

नन्दे धैर्यम् आगतम् । सः गणेशप्रतिमायाः पुरतः स्थित्वा दीपसाक्षितया – ''यदि अहं क्षीरे जलं योजितवान् स्यां तर्हि मम हस्तौ शक्तिहीनौ भवताम् । मया तथा न कृतं चेत् मयि दोषाम् आरोपितवतः स्वरः अपगच्छतु'' इति धैर्येण उक्त्वा दीपं निर्वाप्य नेत्रे निमील्य स्थितवान् ।

ततः क्षणाभ्यन्तरे गजाननपण्डितस्य मुखं विच्छायं जातम् । सः मूकः जातः ।

एतत् दृष्ट्वा तत्र सम्मिलिताः सर्वे सविषादम् उक्तवन्तः – ''अहो, किम् एतत् प्रवृत्तम् !'' इति ।

तदा स्वरकेसरी अवदत् – ''शपथकरणं न क्रीडाकार्यम् इव'' इति ।

स्वरकेसरिणः स्वरं श्रुत्वा नन्दः नेत्रे उद्घाटितवान् । सः स्वस्य हस्तौ दृष्टवान् । तौ तु यथापूर्वम् आस्ताम् । एतस्मात् नितरां सन्तुष्टः सः स्वरकेसरिणः पार्श्वे आगत्य स्थितवान् ।

तस्मिन् एव समये गणेशभट्टः धावन् तत्र आगत्य – ''तात ! शकटात् अवतीर्य अहं धावन् आगतः । अन्ये सर्वे आगच्छन्तः सन्ति'' इति गजाननपण्डितम् अवदत् । गजाननपण्डितेन प्राप्ता दुर्दशा तेन ज्ञाता जनानां मुखात् । झटिति सः कटौ हस्तौ स्थापयित्वा आज्ञास्वरेण अवदत् – ''अये, नन्द ! क्षणं तिष्ठ'' इति ।

स्वरकेसरिणा सह निर्गन्तुम् उद्युक्तः नन्दः गमनं स्थगयित्वा मुखं परिवर्त्य अपश्यत् । देवस्य पुरतः दीपः प्रकाशते स्म । एतस्मात्

सः नितराम् आश्चर्यचकितः ।

''एवं भासते यत् भवता दीपः सम्यक् न निर्वापितः इति । अतः पुनरपि शपथं करोतु । अहम् अपि द्रष्टुम् इच्छामि'' इति आदेश-स्वरेण अवदत् गणेशभट्टः ।

स्वरकेसरी नन्दस्य स्कन्धे हस्तं स्थापयन् किञ्चित् नुदन् स्वव्यवहारेण आदिष्टवान् यत् विना भीतिम् अग्रे गत्वा शपथं करोतु तावत् इति ।

गणेशभट्टः नन्दम् उद्दिश्य - ''यदि अहं जले क्षीरं योजितवान् स्यां तर्हि मम हस्तौ शक्तिहीनौ भवताम् इति सशपथम् उक्त्वा दीपं निर्वापयतु तावत् । विलम्बः न कर्तव्यः'' इति आदिशत् ।



एतत् श्रुतवतः नन्दस्य शरीरात् स्वेदधारा निर्गता । सः कम्पमानेन स्वरेण - ''एवं शपथः सर्वथा न क्रियते मया । स्वरकेसरिणः कथनम् अनुसृत्य मया जले क्षीरं योजितम् । अतः एव क्षीरे जलं न योजितम् इति धैर्येण शपथः कृतः च । कृपया अहं क्षन्तव्यः । क्षन्तव्याः मेऽपराधाः'' इति वदन् गणेश-भट्टस्य पादौ गृहीतवान् । येन चषकेण पूर्वं जलमिश्रितं क्षीरम् आनीतम् आसीत् तेनैव चषकेण जलस्पर्शरहितं क्षीरम् आनीय गजाननपण्डितस्य पुरतः स्थापितं च ।

एतत् दृष्ट्वा तत्र सम्मिलिताः सर्वे हसित-वन्तः । स्वरकेसरी विना वचनं ततः पलायित-वान् । केचन तम् अनुसृतवन्तः ।

गणेशभट्टः जनान् पश्यन् - ''भवद्भिः दृष्टं खलु सर्वम् अपि । क्वचित् शपथकर्तारः, शपथकारयितारः च महादुष्टाः भवन्ति । सज्जनाः केचन वञ्चनां सर्वथा अजानानाः तेषां व्यवहारं सत्यं मन्यन्ते । अद्यैव दृष्टं खलु सत्यम् एव कथम् असत्योपेतं कृतम् इति । सज्जनान् बहुधा वञ्चयन्ते एतादृशाः'' इति ।

''आम् । युक्तम् उक्तं भवता । भवान् वञ्चनां प्रकाशयन् सत्यपक्षं रक्षितवान् । अस्मान् योग्यं मार्गम् उपदिष्टवान् भवान्'' इति वदन्तः जनाः तस्य प्रशंसां कृतवन्तः ।

एतावता गजाननपण्डितेन सम्भाषणशक्तिः पुनः प्राप्ता आसीत् । अतः सन्तोषं प्राप्य जनाः ततः निर्गताः ।

गणेशभट्टः मातामहस्य समीपम् आगत्य - ''भवान् तु नितरां सज्जनः । वञ्चना सर्वथा न ज्ञायते भवता । अतः एव दुष्टाः भवन्तं शपथजाले पातितवन्तः आसन् । कथम् एतत् प्रवृत्तम् इति आश्चर्यम् अनुभवामि अहम्''



उद्घोषितवन्तः - ''सः आसीत् विघ्नेश्वरः । वातापिगणपतिः सः'' इति ।

पावनमिश्रः कथाम् अनुवर्तितवान् -

''तात !'' इति उच्चैः वदन् हस्तौ प्रसार्य धावन् आगतवान् गणेशभट्टः । गजानन-पण्डितः अपि हस्तौ प्रसार्य - ''वत्स !'' इति वदन् प्रीत्या तम् उन्नीय - ''गणेश ! अस्मासु विघ्नेश्वरस्य अनुग्रहः जातः अस्ति । भवद्रूपेण आगत्य सः अस्माकं गृहं पूतं कृतवान् । एतत् गृहम् एव गजाननस्य मन्दिरं जातम् अस्ति'' इति वदन् षष्टिवर्षीयः अपि सः उत्साहवशात् बालः इव नृत्यन् आनन्द-भैरवीरागेण गानम् आरब्धवान् - ''ताण्डव-नृत्यं कुरु गजानन ! धिमिकिट धिमिकिट ...'' इति । एतस्य गीतस्य आलापनेन समग्रं नगरं प्रतिध्वनितं जातम् ।

यदा गजाननपण्डितः आनन्दशिखरे आसीत् तदा स्वरकेसरी धावन् आगत्य गजाननपण्डितस्य पादौ सुदृढं गृहीत्वा - ''गुरुदेव ! यावत् भवान् मां न क्षाम्यति तावत् अहम् इतः न उत्तिष्ठामि'' इति अवदत् ।

गजाननपण्डितः तं हस्ताभ्यां गृहीत्वा उन्नीय - ''स्वरकेसरिन् ! वयं तु सर्वस्यापि निमित्त-मात्राणि । सर्वं प्रचलति गजाननस्य लीलया एव । भवान् शास्त्रपुरस्सरं सङ्गीतशास्त्रम् अधीतवान् अस्ति । मम सङ्गीते तु भक्तेः ममताभावस्य च प्राधान्यम् । मम तु विश्वासः यत् भक्तिसंयोगात् एव सङ्गीतम् उत्तमश्रेणीकं भवति इति । तदास्तां तावत्, अद्य एव सर्वाः स्वर्णप्रतिमाः भवदीयाः भवन्ति । अहं तु

इति अवदत् ।

गजाननपण्डितः तम् उन्नीय अङ्के उपवेश्य नेत्रे निमील्य - ''वत्स ! गणेश ! युक्तम् उक्तं भवता'' इति अवदत् । तावता कश्चन शकटः गृहस्य पुरतः आगत्य अतिष्ठत् ।

गजाननपण्डितः यदा नेत्रे उन्मीलितवान् तदा तत्र बालकः अदृश्यतां गतः आसीत् । तस्मिन् एव समये शकटात् अवतरन् गणेश-भट्टः तेन दृष्टः । तदीयं मुखम् आनन्देन विलसितम् । 'गणेश ! गणेश !' इति वदन् महता आनन्देन सः भैरवीरागस्य आलापनम् आरब्धवान् ।

पावनमिश्रः कथायाः श्रावणं स्थगयित्वा बालान् अपृच्छत् - ''वत्साः ! आदौ यः गणेशभट्टः आगतः आसीत् सः वस्तुतः कः आसीत् ?'' इति ।

बालाः ज्येष्ठाः च एकस्वरेण उच्चैः

सत्कारसम्मानादिकं न इच्छामि । इतः परं सङ्गीतसभासु कुत्रापि अहं सङ्गीतं न श्रावयामि अपि'' इति अवदत् ।

एतत् श्रुत्वा बालकः गणेशभट्टः अवदत् - ''तात ! आत्मसन्तोषाय गृहे एव भवान् गायति चेत् किं वा प्रयोजनं सिद्ध्येत् ? जनेषु उत्तमाभिरुचेः, आनन्दस्य, ममतायाः, भक्तेः च उत्पादनात् एव भवतः पाण्डित्यं सार्थकं भविष्यति'' इति ।

एतत् श्रुत्वा गजाननपण्डितः करौ संयोज्य अवदत् - ''हे विघ्नेश्वर ! भवान् स्वयं मम दौहित्रस्य मुखात् एतानि वचनानि वाचयन् अस्ति इति अहं भावयामि । भवतः प्रेरणायाः अनुगुणं मया अद्यावधि सङ्गीतं श्रावितम् । इतः परम् अपि अहं भवतः आदेशं पालयन् भवदीयस्य यशसः गानं करिष्यामि । भवान् श्रोतॄणां हृदये नृत्यं करोतु । किन्तु मया सम्मान-सत्कारादयः यथा न प्राप्येरन् तथा तु करणीयं भवता एव'' इति ।

गजाननपण्डितः षष्टिवर्षीयः जातः आसीत् खलु ? तेन निषिध्यमानाः अपि जनाः तस्मिन् दिने सायं वातापिगणपतेः मन्दिरस्य पुरतः महतीं सभाम् आयोजितवन्तः । पुष्पवृष्ट्यां जायमानायां गजाननपण्डितस्य षष्ट्यब्दपूर्ति-समारम्भः महता वैभवेन प्रवृत्तः । समारम्भस्य अन्ते गजाननपण्डितः करौ योजयित्वा अवदत् - ''बहवः महानुभावाः सङ्गीतस्य काव्यस्य च उपयोगं भक्तिप्रदर्शनाय कृतवन्तः । तेन भक्तिमार्गस्य श्रेष्ठतां प्रतिपादितवन्तः अपि । मया अपि तस्मिन् एव मार्गे विश्वासः कृतः । तैः महात्मभिः यत् कृतं तदर्थं मदीयां श्रद्धाम् अहम् अर्पयामि । एतदतिरिच्य अन्या कापि



विशिष्टा शक्तिः नास्ति मयि'' इति ।

एतावत् उक्त्वा गजाननपण्डितः विविधैः रागैः विघ्नेश्वरस्य स्तुतिं कुर्वन् अमृतमयं सङ्गीतं श्रावितवान् । तस्मिन् दिने श्रोतॄणां मनः प्रविष्टवान् विघ्नेश्वरः अद्यापि तत्रैव नृत्यन् अस्ति ।

''वातापिनगरस्य इतिहासे तस्य गजाननपण्डितस्य नाम स्वर्णाक्षरैः अङ्कितम् अस्ति'' इति वदन् आचार्यः पावनमिश्रः स्वस्य कथनं समापितवान् ।

एकस्मिन् दिने केचन बालकाः, तत्पृष्ठतः स्थिताः ज्येष्ठाः च एकं चित्रम् आश्चर्येण पश्यन्तः आसन् । तस्मिन् चित्रे एकः विलक्षणः जन्तुः आसीत् । तस्मिन् एव समये पावनमिश्रः तं सभामण्डपं प्रविष्टवान् । बालानां कुतूहलं ज्ञात्वा सः अवदत् - ''वत्साः ! अहं भवद्भ्यः एतच्चित्रसम्बन्धिनीं कथां श्रावयामि । भवन्तः सर्वे उपविशन्तु'' इति ।

एतदनन्तरं सः कथाम् आरब्धवान् - ''इन्द्रः सगरचक्रवर्तिनः अश्वम् अपहृतवान् । सः चक्रवर्तिनः यज्ञस्य पूर्तिं निवारयितुं तथा कृतवान् आसीत् । एवं गच्छन् सः अनेकानि दुष्टकार्याणि अत्याचारान् च कृतवान् ।

सगरचक्रवर्तिनः वंशे जातः अभिनन्दनः इन्द्राय हविः अनर्पयन् एव महायज्ञम् एकम् आरब्धवान् । एतस्मात् क्रुद्धः इन्द्रः यमं सुखभोगादिभिः तर्पयित्वा अभिनन्दनस्य यज्ञस्य भङ्गाय प्रेषितवान् ।

कालयमः कालस्य अधिपतिः । प्राणिनां जीवनमरणयोः कारणं सः ।

कालयमः यज्ञपुरुषस्य अन्तः प्रविश्य पर्वताकारकस्य जन्तोः रूपं प्राप्य अग्नितः उत्थितवान् । तं दृष्ट्वा भीताः ऋत्विजः होतारः अध्वर्युः च ततः पलायितवन्तः । सः जन्तुः यज्ञवाटिकायाः ध्वंसे उद्युक्तः जातः ।

राजा अभिनन्दनः गणेशस्य भक्तः आसीत् । अतः गुरुः वसिष्ठः तम् अवदत् - ''महाराज ! एतादृशः विघ्नः उत्पद्येत इति ऊहितवान् अहं होमकुण्डस्य पुरतः एकं स्वस्तिकासनं कारितवान् अस्मि । स्वस्तिकं च गणेशस्य सङ्केतः । भवान् स्वस्तिकमध्ये हरिद्राराशिं कृत्वा तत्र गणेशम् अभिध्यायतु । तच्च स्वस्तिकं विघ्नं नाशयिष्यति'' इति ।





# राक्षस्या पालितः शुकः

वीरबाहुः कश्चन मुग्धः मनुष्यः । सः जानाति स्म यत् सर्वे मां वञ्चयन्ति इति । तथापि सः कदापि कस्यापि विरोधं न प्रकटयति स्म । मौनेनैव सर्वं सहते स्म । सः क्षीर-विक्रयणेन जीवनं यापयति स्म ।

वीरबाहोः गृहस्य पार्श्वे एकं पुरातनं गृहम् आसीत् । रिक्तं तत् गृहं प्रति विष्णुः लक्ष्मीः चेति दम्पती भाटकार्थम् आगतौ । तौ उभौ अपि वञ्चकेषु अग्रगण्यौ । स्वकार्यम् अन्यैः कारयितुं सर्वदा तौ सन्नद्धौ एव ।

दिनत्रये एव तौ दम्पती वीरबाहोः मुग्धतां ज्ञातवन्तौ । अतः तौ वीरबाहुना अनेकानि कार्याणि कारयितुम् उद्युक्तौ जातौ वेतनं विना एव ।

वीरबाहुः नगरे क्षीरं विक्रीय गृहाय यानि वस्तूनि आवश्यकानि तानि नगरतः एव आनयति स्म । प्रभाते सः स्वयमेव स्वगृहस्य अङ्गणस्य स्वच्छतां करोति स्म । कूपात् जलस्य आनयनम् अपि तदा तदा करणीयं भवति स्म तेन ।

अथ कदाचित् वीरबाहोः पुत्र्याः विवाहः निश्चितः । वाराणस्याम् उत्तमाः कौशेय-शाटिकाः लभ्यन्ते इति जानन् सः ततः विवाहाय शाटिकाः आनेतुं वाराणसीं प्रति प्रस्थितः ।

मञ्चे उपविष्टः विष्णुः वाराणसीं प्रति प्रस्थितं तं दृष्ट्वा – ''मित्र ! मम पत्न्यै अपि एकां शाटिकाम् आनयतु । निवर्तनानन्तरं धनं दास्यामि'' इति उक्तवान् ।

वीरबाहुः वाराणस्यां लक्ष्म्याः निमित्तम् अपि एकां शाटिकां क्रीतवान् । प्रतिनिवृत्तं वीरबाहुं विष्णुः गृहस्य पुरतः एव निरुध्य तेन आनीतासु शाटिकासु उत्तमां शाटिकां चित्वा – ''अद्य शुक्रवासरः । मम पत्नी धनपेटिकातः धनं न निष्कासयति । अतः श्वः धनं स्वी-करोतु'' इति उक्तवान् ।

भामहः



अस्माकं तु धनम् आवश्यकम् एव । अतः भवान् आपणिकं दृष्ट्वा प्रवृत्तं सर्वं निवेदयतु । कथञ्चित् तस्य अङ्गीकारं प्राप्य शाटिकां प्रत्यर्प्य धनम् आनयतु'' इति ।

वीरबाहुः तस्याः वचनम् अङ्गीकृत्य वाराणसीं प्रति प्रस्थितः । शीघ्रं गन्तव्यमिति उद्देशेन सः वाहनमार्गं परित्यज्य वनमार्गम् आश्रितवान् । वने कश्चन महान् वटवृक्षः आसीत् । तस्मिन् वृक्षे काचन राक्षसी निवसति स्म । सा राक्षसी अपि स्वपुत्र्याः विवाहकार्ये संलग्ना ।

तत्र आगतं वीरबाहुं दृष्ट्वा सा राक्षसी आश्चर्यचकिता सती – ''अहो, अपूर्वः अस्ति कलियुगस्य प्रभावः ! मादृश्याः राक्षस्याः वासस्थानं कथम् अयं स्वयम् आगतः ? कथम् एतावत् धैर्यम् एतस्य ?'' इति स्वगतम् उक्तवती ।

राक्षसीं पश्यतः वीरबाहोः शरीरे कम्पनम् आरब्धम् । तथापि कथमपि आत्मनि धैर्यं प्रपूर्य सः – ''भोः, राक्षसि ! कृपया मम कामपि हानिं मा करोतु भवती । मम पुत्र्याः विवाहकार्ये व्यस्तः अस्मि अहम्'' इति उक्त्वा राक्षस्या पृष्टानां प्रश्नानाम् उत्तरं सविस्तरम् उक्तवान् ।

ततः कौशेयशाटिकां प्रत्यर्प्य धनम् आनेतुं यत् प्रस्थितं, शीघ्रं गन्तुं शक्यमिति समीपतरः अरण्यमार्गः आश्रितः यत् तत् च सः विस्तरेण उक्तवान् ।

राक्षस्याः प्रतिवचनदानात् पूर्वम् एव वधू-वेशेण आत्मानम् अलङ्कृतवती राक्षस्याः पुत्री वृक्षात् कूर्दनं कृत्वा वीरबाहोः हस्तात्

चत्वारि दिनानि अतीतानि । विष्णुना धनं न दत्तम् । पुत्र्याः आभरणानि कारणीयानि आसन् । अतः निरुपायः सन् वीरबाहुः विष्णोः गृहं गत्वा द्वारताडनं कृतवान् । द्वारोद्घाटनसमनन्तरमेव वीरबाहुः विष्णुम् उक्तवान् – ''मम धनम् आवश्यकम् । अतः कौशेयशाटिकायाः पञ्चशतं रूप्यकाणि ददातु कृपया'' इति ।

विष्णुः सरभसम् अन्तः गत्वा तां कौशेयशाटिकाम् आनीय भूमौ क्षिपन् उक्तवान् – ''भवतः, भवता आनीतायाः शाटिकायाश्च सम्बन्धः एव मास्तु मम । एषा शाटिका मम पत्न्यै न अरोचत । अतः एतां भवान् एव नयतु'' इति ।

एतं विषयं ज्ञातवती वीरबाहोः पत्नी उक्तवती – ''इदानीं किं कर्तुं शक्यते ?

स्यूतं गृहीतवती ।

स्यूतात् शाटिकां निष्काष्य तां मात्रे दर्शयन्ती – ''अम्ब ! पश्यतु, अहो, कियत् सुन्दरम् अस्ति एतत् ! चर्मणः वस्त्रं परित्यज्य एतां शाटिकां यदि धरिष्यामि तर्हि सर्वे मामेव द्रक्ष्यन्ति । अतः धनं दत्त्वा एतां शाटिकां स्वीकरोतु'' इति मातरम् उक्तवती ।

राक्षसी पुत्र्याः इच्छानुगुणं धनं दत्त्वा वीरबाहुतः तां शाटिकां क्रीतवती । धनं स्वीकृत्य प्रस्थिताय वीरबाहवे पञ्जरस्थम् एकं शुकं ददती सा राक्षसपुत्री उक्तवती – ''एषः शुकः भाषते । मम अतीवप्रियः एषः । किन्तु शुकसारिकानां विषये मम भाविश्वश्र्वाः अतीव कोपः अस्ति । अतः अस्य शुकस्य कारणात् गृहे कलहः मास्तु इति उद्देशेन भवते एतं समर्पयन्ती अस्ति'' इति ।

वीरबाहुः तं शुकं स्वीकृत्य गृहं प्रतिनिवृत्तः । आगतस्य तस्य हस्ते स्थितं शुकं दृष्टवती लक्ष्मीः वीरबाहुं शुकविषये पृष्टवती । सः प्रवृत्तं सर्वम् उक्तवान् ।

तत् श्रुत्वा सा – ''एवं तर्हि शाटिकायाः धनं भवता प्राप्तम् । मह्यं सा शाटिका न अरोचत । अतः एव भवता वाराणसी गन्तव्या अभवत् । तेनैव एषः शुकोऽपि भवता प्राप्तः । शुकस्य प्राप्तिः मत्तः एव अभवत् इति कारणात् एषः शुकः भवेत् ममैव'' इति वदन्ती तं शुकं वीरबाहुहस्तात् बलात् गृहीतवती ।

लक्ष्म्या नीतं शुकं दृष्ट्वा आश्चर्यचकितः विष्णुः पत्नीं पृष्टवान् – ''एतं शुकं कस्मात् आनीतवती ? भवती किं कर्तुम् उद्युक्ता



अस्ति ?'' इति ।

''इतःपरं अनेन भाषमाणेन शुकेन अस्माकं भाग्यं कथं परिवर्तिष्यते इति ज्ञायते भवता'' इति सगर्वम् उक्तवती लक्ष्मीः ।

''शुकस्य कारणतः कीदृशं भाग्यपरिवर्तनं भवितुं शक्यम् ?'' इति संशयमिश्रितेन स्वरेण पृष्टवान् विष्णुः ।

''शृणोतु । परश्वः अस्माकं राज्ञः पुत्रस्य पञ्चमः जन्मदिनोत्सवः । महता वैभवेन सः उत्सवः प्रचलिष्यति । तस्मिन् दिने युवराजाय एतं भाषमाणं शुकम् उपायनरूपेण यदि दद्यां तर्हि राजा आवाभ्यां महत् धनं दद्यात्'' इति उत्साहेण पतिम् उक्तवती लक्ष्मीः ।

लक्ष्म्याः वचनस्य समाप्तितः पूर्वमेव सः शुकः पक्षौ चालयन् उक्तवान् – ''अहो, मम भाग्यम्'' इति ।

अनन्तरदिने राक्षसीपुत्र्या पालितं तं शुकं विष्णुः लक्ष्मीः च राजधानीं नीतवन्तौ । राजप्रासादे युवराजस्य जन्मदिनाचरणं महता वैभवेन प्रचलत् आसीत् ।

लक्ष्मीः राजानं नमस्कृत्य विनयेन उक्तवती - ''प्रभो ! युवराजः यस्मिन् दिने जन्म अलभत तस्मिन् एव दिने अहं महता कष्टेन एतं शुकं गृहीत्वा एतावत्पर्यन्तं पालितवती च । शुकः भाषणमपि अध्यापितः मया । एषः शुकः युवराजाय एतस्मिन् जननदिनोत्सवावसरे मया सहर्षम् उपायनीक्रियते'' इति ।

लक्ष्म्याः वचनेन राजा, राज्ञी च सन्तुष्टौ । युवराजः तं शुकं गृहीत्वा - ''अयि, शुक ! मया सह सम्भाषणं कुरु'' इति वदन् तं चुम्बितवान् ।

राक्षस्या पालितः शिक्षितश्च सः शुकः - ''अहो, अहं भाग्यवान् अस्मि । भवान् नवनीतवत् मृदुरस्ति, शोभमानश्च । किन्तु यदि भवान् मृतः भवेत् तर्हि उष्णघृतमिव गन्धं प्रसारयेत् । मम मनसि भवतः खादनेच्छा जायमाना अस्ति'' इति वदन् सः युवराजस्य हस्तं चञ्च्वा दष्टवान् ।

युवराजः उच्चैः रुदन् तं शुकं त्यक्तवान् । सः शुकः उड्डीय गतः एव । युवराजः वेदनया अश्रूणि मोचितवान् । एतत् दृष्ट्वा राजदम्पती कुपितौ अभवताम् ।

राजवैद्यम् आनाय्य युवराजस्य चिकित्सा कारिता । मन्त्री राजानम् उक्तवान् - ''महाराज ! प्रतिवेशिराज्यस्य राज्ञः दुष्कृत्यं स्यात् एतत् । युवराजस्य जननदिनोत्सवे अशुभवचनानि भाषमाणम् एतं शुकं दुरुद्देशेनैव प्रेषितवान् स्यात् सः शत्रुराजः'' इति ।

एतत् श्रुत्वा राज्ञा आज्ञा दत्ता - ''कशया ताडयित्वा एतौ दम्पती कारागृहे बन्धिनौ क्रियताम्'' इति ।

विष्णुः लक्ष्मीः च एवम् आपदि मग्नौ । स्वनिर्दोषितां प्रमाणीकर्तुम् उभाभ्यामपि महान् प्रयत्नः कृतः । षण्णां मासानाम् अनन्तरं तयोः मोचनम् अभवत् । पुनः स्वग्रामं गन्तुम् अनिच्छन्तौ तौ अन्यस्मिन् ग्रामे वासं कृतवन्तौ ।

एवं राक्षस्याः पुत्र्याः शुकः वीरबाहुं विष्णुलक्ष्म्योः सहवासात् मोचितवान् । ततः वीरबाहुः सपरिवारं सुखेन जीवनम् अकरोत् ।





# दोषपरिमार्जनम्

सीतारामः कश्चन वणिक् । सः सीता-नामिकां कन्यां परिणीतवान् । सा पत्युः गृहम् आगता । एकस्मिन् मासे एव श्वश्र्वा सह कलहं कुर्वती सा तां ननान्दुः गृहं प्रेषितवती । इदानीं गृहे सीतारामः सीता च उभौ एव वसतः ।

सीतारामस्य पार्श्वगृहस्थौ राजारामः सोमनाथश्च । तयोः आर्थिकपरिस्थितिः समीचीना न आसीत् । अतः राजारामस्य पत्नी रमा, सोमनाथस्य पत्नी सत्या च सीतया सह स्नेहं सम्पादितवत्यौ । स्नेहकारणात् ते उभेऽपि दालशर्कराप्रभृतीनाम् ऋणरूपेण स्वीकरणम् आरब्धवत्यौ ।

किन्तु सीता बहुबुद्धिमती । सा मधुरैः वचनैः एव ते तोषयित्वा किमपि अयच्छन्ती प्रतिप्रेषयति स्म ।

केषुचित् एव दिनेषु सीताराम-सीतयोः मध्ये लघुषु अपि विषयेषु कलहस्य आरम्भः अभवत् । सीता तु अलसा आसीत् । मध्याह्ने एव रात्रिपाकम् अपि समाप्य आदिनं विना कार्यं तिष्ठति स्म सा । सीतारामस्य आगमनं प्रतिदिनमपि रात्रौ महता विलम्बेन भवति स्म । यावत् जनाः आगच्छेयुः तावत् आपणिकेन आपणे स्थातव्यम् एव भवति खलु ?

एकदा रात्रौ स्थालिकायां परिवेषितं शीतलम् अन्नं दृष्ट्वा कुपितः सीतारामः कोपेन पत्नीं तर्जयन् – ''किम् एतत् भोजनम् एवं शीतलम् अस्ति ! गृहे सुखेन स्थीयते खलु ? रात्रौ अपि पाककरणे कः क्लेशः ? मम माता कदापि एवं न परिवेषितवती'' इति अवदत् ।

तदा सीता पत्युः वचनेन कुपिता सती उच्च-स्वरेण पतिम् उपहसन्ती उक्तवती – ''अहो, महाधनिकः भवान् ! भवतः आयेन अहं सुखसागरे मज्जिता अस्मि । मम मातुः अग्रजायाः पुत्रीं पश्यतु । तस्याः श्वशुर-गृहजनानाम् एकरत्रयमिता भूमिः अस्ति । तथापि विवाहे तस्यै सुवर्णमयः हारः दत्तः ।



तावदेव न, विवाहानन्तरं त्रिमासाभ्यन्तरे एव पुनः सुवर्णकङ्कणद्वयम् अपि कारितं तैः । भवता आदिनं वाणिज्यं कुर्वता धनं सम्पाद्यते चेदपि भवतः मात्रा तु एतत् न बुद्धं यत् गृहे स्थितायै स्नुषायै सुवर्णहारः कारणीयः इति । विवाहितायाः मम षट् मासाः अतीताः । भवता मदर्थं किं किमपि आनीतम् ?'' इति ।

कलहस्य आरम्भः अभवदेव । उभावपि परस्परं निन्दन्तौ आस्ताम् । कुपितः सीतापतिः – ''भवादृश्या कलहशीलया अलसया सह जीवनयापनं नितरां कष्टकरम् । अहम् एकाकी सन् सुखेन स्थास्यामि । भवती यत्र इच्छति तत्र गन्तुम् अर्हति'' इति वदन्नेव पत्न्याः पाणिं गृहीत्वा तां द्वारात् बहिः प्रेषयितुम् उद्युक्तः ।

सीता अपि क्रोधेन स्ववस्त्रादिकं सर्वं पेटिकायां प्रपूर्य – ''अहं गच्छन्ती अस्मि । भवता जीवनं कथं याप्यते इत्यत्र नास्ति मम आसक्तिः । भवान् यथा इच्छति तथा वसतु । भवान् यावत् स्वयम् आगत्य मां न आह्वास्यति तावत् अहम् एतत् गृहं न आगमिष्यामि'' इति उक्त्वा गृहात् बहिः गतवती ।

''मया आगत्य भवती आह्वातव्या वा ? कदापि अस्य सम्भवः नास्ति । अहं महाराजः इव जीवनं यापयिष्यामि । भवतीं कदापि न स्मरिष्यामि'' इति उच्चैः वदन् सीतारामः द्वारं पिहितवान् ।

क्षणाभ्यन्तरे एषः विषयः सर्वत्र प्रसृतः । घण्टाभ्यन्तरे राजारामस्य पत्नी रमा खाद्यं कृत्वा आनीय सीतारामस्य पुरतः संस्थाप्य उक्तवती – ''भ्रातः, भवतः परिस्थितिः मयि दुःखं जनयति । भवान् कथम् एकाकी वसति ? महती बुभुक्षा स्यात् भवतः । अतः मया उष्णं खाद्यं कृत्वा आनीतम् । एतत् खादतु'' इति ।

पुरतः स्थितं खाद्यं दृष्ट्वा सीतारामः अवशः सन् तत् मुखे स्थापितवान् एव ।

तदा रमा सन्तुष्टा सती उक्तवती – ''भ्रातः ! मया कश्चन विचारः उच्यते । अन्यथा न चिन्तनीयं भवता । भवतः स्नुषायाः, तन्नाम मम पुत्र्याः विवाहस्य निश्चयः श्वः भविष्यति । पुत्रीम् अलङ्कर्तुम् एकोऽपि कण्ठहारः नास्ति मम गृहे । अतः कथं वरपक्षीयाणां पुरतः ताम् उपवेशयिष्यामि इति दुःखं मां बाधते । सीतायाः सुवर्णहारः भवता सकृत् दत्तः चेत् वरपक्षीयाणाम् आगमनसमये धारयित्वा तेषां गमनस्य अनुक्षणमेव प्रत्यर्पयेयम् । वरपक्षीयाः

यदा आगमिष्यन्ति तदा तत्र भवता अवश्यम् उपस्थातव्यम् । भवान् अग्रजः सन् तत्र उपस्थितः भवेदेव'' इति ।

रमायाः वचनेषु आत्मीयता माधुर्यं चापि स्रवति स्म इव । सीतारामस्य मनसि सीता-विषये क्रोधोऽपि आसीत् इति कारणात् रमायाः वचनं तस्य प्रियकरम् आसीत् । अतः सः प्रकोष्ठं गत्वा सीतायाः कण्ठहारम् आनीय रमायै ददत् उक्तवान् - ''स्वीकरोतु भगिनि ! कापि चिन्ता मास्तु । यदा शक्यते तदा प्रत्यर्पयतु'' इति ।

रमा अनेन सन्तुष्टा सती हारं स्वीकृत्य यदा प्रस्थिता तदा बहिर्भागतः कश्चन वृद्धः सीतारामस्य गृहं प्रविष्टवान् । सः सीतारामं - ''का एषा ? यदा शक्यते तदा कस्य वा प्रत्यर्पणम् ? किं प्रचलति अत्र ?'' इति पृष्टवान् ।

अकस्मात् आगतं पितृव्यं विक्रमं दृष्ट्वा सीतारामः आनन्दं प्राप्तवान् । किन्तु रमा भीता जाता ।

पितृव्यं सीतारामः सर्वम् उक्तवान् । तदा सः रमां कोपेन पश्यन् - ''एषः हारः न सीतायाः, अपि तु मम पुत्र्याः । विवाहसमये मम भ्रातृजाया स्नुषाम् अलङ्कर्तुम् एतं हारं स्वीकृतवती । इदानीं मम पुत्र्याः विवाहः निश्चितः अस्ति । अतः हारं नेतुमेव आगतः अहम्'' इति उक्तवान् ।

सीतारामः जानाति स्म यत् पितृव्यः असत्यं वदन् अस्ति इति । किन्तु किमर्थम् एवं वदन् अस्ति इति तेन न ज्ञातम् । किं वदामि इति यावत् सः चिन्तयन् आसीत् तावता एव रमा



स्वहस्ते स्थितं हारं सीतारामस्य पितृव्यस्य हस्ते दत्तवती एव ।

यावत् रमा हारं दत्त्वा प्रतिगन्तुं बहिः पदं स्थापितवती तावता एव सत्या किञ्चित् पात्रं स्वीकृत्य आगता । तत्र सीतारामस्य पितृव्यं दृष्ट्वा सा आश्चर्यचकिता ।

पितृव्यः विक्रमः सत्यां पृष्टवान् - ''भवती का ? किमिच्छति ?'' इति ।

अनेन प्रश्नेन भीता सत्या - ''गृहे तण्डुलः न आसीत् । अपत्यानि बुभुक्षया पीडितानि । अतः..'' इति उक्त्वा वचनं मध्ये स्थगित-वती ।

तस्याः वचनसमाप्तितः पूर्वमेव सीता सरभसं गृहस्य अन्तः प्रविश्य उक्तवती - ''सर्वम् असत्यम् । ह्यः सायं भवत्याः पुत्रम्

आपणतः तण्डुलपूर्णं स्यूतं स्कन्धे संस्थाप्य आनयन्तम् अहं दृष्टवती'' इति ।

पुनः पतिं पश्यन्ती सा उक्तवती – ''बहोः समयात् अहं, भवतः पितृव्यश्च वातायनेन अत्र प्रवृत्तं सर्वं पश्यन्तौ एव आस्व । मम अनुपस्थितौ प्रतिवेशिन्यः अहो, कथं लाभं प्राप्तुं प्रयतन्ते !!'' इति ।

सीतायाः अनिरीक्षितागमनेन सीतारामः स्तब्धः । सत्या अपि एतां दृष्ट्वा भीत्या प्रतिगता ।

तदा पितृव्यः सीतारामं सीतां च उद्दिश्य – ''दृष्टं खलु उभयोः कलहस्य परिणामः कः इति ? भवन्तौ प्रीत्या विश्वासेन च वसेताम् । पतिपत्न्योः मध्ये यदि कलहः भवति तर्हि प्रतिवेशिन्यः स्वार्थं सम्पादयितुम् उत्सुकाः भवन्ति । मम भ्रातृजाया स्वननान्दुः गृहे वसन्ती भवतोः चिन्तामेव करोति । तद् वक्तुमेव अहम् आगतः । समये आगतः इति कारणात् अत्र काऽपि हानिः न जाता'' इति वदन् तं हारं सीतायै दत्तवान् ।

''मम भाग्यवशात् मार्गे भवान् मिलितः । तस्मात् आवां रक्षितौ'' इति वदन्ती सीता अश्रूणि स्रावितवती ।

''मम भ्रातृजायया स्नुषायै हारः दातव्यः इति उद्देशेन महता कष्टेन धनं सङ्गृह्य एषः हारः कारितः । तस्याः विषये भवन्तौ उभौ अपि अनुचितम् आचरितवन्तौ । इदानीं भवद्भ्यां ज्ञातं स्यात् – गृहे काचन ज्येष्ठा आवश्यकी एव इति । ज्येष्ठाः सर्वदा आदरेण द्रष्टव्याः । तेषां वचनं च श्रोतव्यम् । एतत् भवतोः कर्तव्यम् । अनेन भवतां जीवनं सुखमयं भविष्यति'' इति सीतारामं सीतां च बोधितवान् पितृव्यः ।

तस्य वचनेन लज्जाम् अनुभूय सीता – ''मया आत्मनः दोषः ज्ञातः । एतम् अनुभवम् अहं कदापि न विस्मरामि'' इति उक्त्वा पतिं दृष्ट्वा – ''श्वश्रूम् आनेतुं भवान् इदानीं गच्छतु'' इति उक्तवती ।

पत्न्याः वचनेन सीतारामः अतीवसन्तुष्टः । पत्युः हसन्मुखतां दृष्ट्वा सीता पितृव्यं विक्रमं उक्तवती – ''श्वश्र्वाः आगमनपर्यन्तं भवान् इतः गन्तुं न अर्हति । तस्याः आगमनानन्तरमपि द्वित्राणि दिनानि भवता अत्र स्थातव्यम् एव'' इति ।





# आर्यः

## अज्ञातस्य राजकुमारस्य साहसमयी विचित्रगाथा

स्वकीये बाल्यकाले सः वन्यजीविनां मध्ये वसन् निश्चिन्तं जीवनं यापितवान् । यौवन-काले तेन मानवप्रपञ्चे पदं स्थापितम् । तदा आरब्धा प्रतिपदं विपत्तिः । तस्य प्राणाः अपायग्रस्ताः जाताः । स च अपायः आसीत् न वन्यपशूनां कारणतः, अपि तु भयङ्कराणां मानवव्याघ्राणां कारणतः । सः आसीत् शक्तिशाली साहसी च । अतः शत्रूणां सम्मुखीकरणे नाशने च न कदाचिदपि भीतः सः । सः असाधारण-वीरः साहसी आर्यः कः ? विचित्रः अज्ञातः युवराजः सः । चन्दमामायाः सप्टम्बर्-२००३ अङ्कतः तदीयगाथायाः आरम्भः । विचित्रा साहसपूर्णा चित्रमयी गाथा पठ्यताम्, आनन्दसागरे निमज्ज्यतां च ।

**समीपस्थम् अभिकर्तारम् उक्त्वा अद्यैव प्रतिकृतिप्राप्तिः दृढीक्रियताम् ।**

S.Gandhi Ayya



# देवस्य सन्देहः

प्रशान्तवरः कश्चन सुन्दरः ग्रामः । तस्य ग्रामस्य चतसृषु दिक्षु पर्वताः सन्ति । ग्रामात् बहिः नदी काचित् कलकलशब्दं कुर्वती प्रवहति । तस्याः नद्याः तीरे मौनयोगी नाम कश्चन वेदान्ती निवसति । सः प्रतिमासं पूर्णिमायां भक्तेभ्यः दर्शनं ददाति । तस्मिन् दिने घण्टापर्यन्तं भक्तानां प्रश्नानाम् उत्तरं ददत् तेषां सन्देहनिवृत्तिं करोति । अन्येषु दिनेषु तस्य दर्शनं नास्ति । सः ध्यानमग्नः सन् कुटीरे एव निवसति ।

कदाचित् पूर्णिमायां सर्वे भक्ताः आगत्य तस्य दर्शनं कृत्वा प्रवचनादिकं च श्रुत्वा प्रतिनिवृत्ताः । किन्तु देवः नाम कश्चन शिरः अवनमय्य तत्रैव उपविष्टः आसीत् । सः पञ्चाशद्वर्षीयः ।

तं दृष्ट्वा सः योगी पृष्टवान् – ''किं प्रष्टुम् इच्छति भवान् ?'' इति ।

क्षणं यावत् सङ्कोचम् अनुभवन् स्थितः सः उक्तवान् – ''स्वामिन्, केभ्यश्चित् दिनेभ्यः अस्य विश्वस्य, सृष्टिकर्तुः च विषये अनेके सन्देहाः मयि उत्पद्यमानाः सन्ति । तेषां सन्देहानां समीचीनम् उत्तरं प्राप्तुम् अहम् आगतः'' इति ।

''ते के सन्देहाः ? पृच्छतु तावत्'' इति उक्तवान् सः योगी ।

''स्वामिन्, सर्वेषां विश्वासः एषः यत् जगति स्थितानां सर्वेषामपि सृष्टिकर्ता सः भगवान् इति । भगवतः सृष्टिषु मानवसृष्टिः एव अत्युत्तमा । तादृशेषु मानवेषु कियान् भेदः दृश्यते ! तेषु शत्रुभावना, प्रतीकारः द्वेषः, वञ्चनं, परस्परं हननम् इत्यादयः दृश्यन्ते बहुधा । एवं किमर्थं भवति ? मनुष्याणां सृष्टिकर्ता एतत् सर्वं पश्यन् स्वस्य सृष्टौ जातां दुःस्थितिं च जानन् अपि मौनेन तिष्ठति किमर्थम् ? एतादृशाः प्रश्नाः पुनः पुनः उद्भूय मम मनः अशान्तं कुर्वन्ति'' इति उक्तवान्

नारायणः

सः देवः ।

तदा योगी हसन् तं पृष्टवान् - ''भवतः कति पुत्राः ?'' इति ।

सः उक्तवान् - ''चत्वारः । द्वौ पुत्रौ, द्वे पुत्र्यौ च'' इति ।

''सर्वान् महत्या प्रीत्या एव भवान् पालितवान् किल ?'' इति पृष्टवान् योगी ।

''सत्यम् । उत्तमरीत्या एव अहं तान् सर्वान् पालितवान्'' इति उक्तवान् देवः ।

''इदानीं ते सर्वे कथं सन्ति ? कुत्र कुत्र च सन्ति ?'' इति योगी देवं पृष्टवान् ।

''कथं वदामि स्वामिन् ? मया, मम मातापितृभ्यां च सर्वेषां पालनं प्रीत्या कृतम् । ज्येष्ठं पुत्रं वयं महत्या प्रीत्या पालितवन्तः । प्रीत्यतिशयकारणतः सः विद्यारहितः अभवत् । दुष्टानां मैत्रीं कुर्वन् सः सप्तदशे वयसि एव महालुण्ठाकः अभवत् । कस्यचित् धनिकस्य हननं कृत्वा सः कुत्रापि पलायितः । इदानीं सः कुत्र इति न ज्ञायते'' इति दुःखेन उक्तवान् देवः ।

''द्वितीयः कथम् अस्ति ?'' इति पृष्टवान् योगी ।

''द्वितीयः विद्यावान् तु अभवत् । नगरे कञ्चन उद्योगं कुर्वन् सः प्रतिमासं किञ्चित् धनं गृहं प्रति प्रेषयति स्म । किन्तु सः माम् अनुक्त्वा नगरे एव कस्यचित् धनिकस्य पुत्रीं परिणीतवान् । ततः आरभ्य तस्य स्वभावे परिवर्तनं जातम् । वर्षे एकवारम् अस्मान् द्रष्टुम् आगच्छति चेत् तदेव वयं महाभाग्यं मन्यामहे'' इति देवेन उक्तम् ।

''अस्तु, भवतः पुत्र्योः स्थितिः कीदृशी अस्ति ? तदपि वदतु तावत्'' इति उक्तवान् योगी ।

''मम ज्येष्ठपुत्र्याः पठने आसक्तिः न आसीत् । अतः तस्याः विद्याभ्यसाय मया कृतः प्रयत्नः सर्वोऽपि व्यर्थः सञ्जातः । षोडशे वयसि तस्याः अनारोग्यं जातम् । वैद्येन कृता चिकित्सा निष्फला अभवत् । सा मृता'' इति



देवः महता दुःखेन उक्तवान् ।

योगी क्षणकालस्य मौनस्य अनन्तरं पृष्टवान् - "भवतः द्वितीया पुत्री कथम् अस्ति ?" इति ।

योगिनः प्रश्नः देवे सन्तोषम् अजनयत् । सः उक्तवान् - "स्वामिन् ! सा एव आवयोः पतिपत्न्योः जीवनदात्री अस्ति । मम द्वितीया पुत्री सङ्गीतज्ञा । सम्यक् गायति सा । प्रतिवेशिगृहबालान् सङ्गीतं पाठयति अपि । आवयोः रक्षणं सा एव श्रद्धया कुर्वती अस्ति" इति ।

योगी अनेन उत्तरेण तृप्तः सन् देवम् उक्तवान् - "पश्यतु ! भवतः चत्वारः पुत्राः । सर्वेषां पालनपोषणं भवता समानरीत्या, प्रीत्या च कृतम् । तथापि ते चत्वारः अपि चतुष्प्रकारकाः अभवन् । अस्मिन् विषये भवतः दायित्वं यावत् आसीत् तावदेव कोटिशः जनानाम् सृष्टिकर्तुः भगवतः अपि अस्ति" इति ।

योगिनः उत्तरेण देवे तृप्तिः न सञ्जाता । तत् ज्ञात्वा सः योगी पुनः उक्तवान् - "भवतः सन्देहानाम् उत्तरं मया विस्तरेण दीयते, शृणोतु । जीवने अनुभूयमानानां सुखदुःखानां, जयपराजयानां च अनेकानि कारणानि भवन्ति । किन्तु मानवः चिन्तयति यत् यदा श्रेयः भवति तदा तस्य कारणम् अहमेव इति । यदा पराजयः भवति तदा सः वदति - एतस्य कारणं भगवान् एव इति । किन्तु द्वयोः अपि कारणं सः एव मानवः भवति । मानवेषु स्थितान् दुष्टगुणान् भगवान् किमर्थं न दूरीकरोति इति चिन्तनमेव असाधु । सद्गुणाः दुर्गुणाः चेति सर्वेऽपि अस्माभिः आचरितानां कर्मणां फलानि । कानिचन कर्माणि सद्यः फलप्रदानि भवन्ति । कानिचन अनन्तरकाले फलानि ददति । भगवतः लीला अस्माभिः ज्ञातुम् अशक्या । तस्य विषये दोषस्य आरोपः न उचितः" इति ।

अनेन उत्तरेण सन्तुष्टः देवः योगिनं साष्टाङ्गं नमस्कृतवान् । योगी तम् आशीर्वादवचनैः अनुगृह्य स्वस्य ध्यानमन्दिरं गतवान् ।



# रोदनं केशग्रहणाय...



लघुः राहुलः स्वस्य कुटुम्बस्य अतिकनीयान् सदस्यः । सः अतीव चटुलः आसीत् । एकस्मिन् सायङ्काले सः अनवरतं रोदनम् आरब्धवान् । एतेन तस्य पितरौ खिन्नौ जातौ । तौ तस्य रोदनस्य स्थगने अशक्तौ अभवताम् । तौ तस्य दुःखस्य कारणमपि न ज्ञातवन्तौ । तस्य मनस्स्थितेः परिवर्तनार्थं तौ बहुधा प्रयत्नं कृतवन्तौ । राहुलस्य पिता तस्मै चाकलेहं दत्त्वा तस्य विचार-परिवर्तनार्थं प्रयत्नं कृतवान् । राहुलः चाकलेहं खादित्वा पुनः रोदनम् आरब्धवान् ।

राहुलस्य माता तस्मै तदीयप्रियपाञ्चालिकां दत्तवती । परन्तु सः इतोऽपि उच्चैः रोदनम् आरब्धवान् । तस्य पितामही आगत्य तस्मै तीर्थं दत्त्वा ललाटे चन्दनं लेपयित्वा मन्त्रोच्चारणं कृतवती । परन्तु राहुलस्य रोदनं तु न स्थगितम् ।

तस्य रोदनं श्रुतवन्तः प्रतिवेशिनः एकैकशः आगत्य राहुलस्य रोदनस्थगनाय एकैकम् उपायं सूचितवन्तः । तावता राहुलस्य ज्येष्ठाग्रजः सलिलः गृहपाठतः प्रत्यागतः । गृहस्य पुरतः जातं जनसम्मर्दं दृष्ट्वा सः आश्चर्यचकितः अभवत् ।

रुदन्तम् अनुजम् अवलोकितवान् सः ज्ञातवान् यत् सः स्वच्छायां दृष्ट्वा रुदन् अस्ति इति । सलिलः अवगतवान् यत् सः स्वच्छायायाः केशगुच्छं ग्रहीतुं प्रयतमानः अस्ति इति । सः छायां प्रति यदा चलति तदा छाया अपि अग्रे धावति स्म । तस्मात् सः रुदन् आसीत् । सलिलः राहुलस्य हस्तं तस्य केशस्य उपरि स्थापितवान् । तदा राहुलः उच्चैः हसितवान् । यतः छायायां केशः गृहीतः दृश्यते स्म । सर्वे अपि सलिलस्य समयप्रज्ञां श्लाघितवन्तः ।

देवः महता दुःखेन उक्तवान् ।

योगी क्षणकालस्य मौनस्य अनन्तरं पृष्टवान् - ''भवतः द्वितीया पुत्री कथम् अस्ति ?'' इति ।

योगिनः प्रश्नः देवे सन्तोषम् अजनयत् । सः उक्तवान् - ''स्वामिन् ! सा एव आवयोः पतिपत्न्योः जीवनदात्री अस्ति । मम द्वितीया पुत्री सङ्गीतज्ञा । सम्यक् गायति सा । प्रतिवेशिगृहबालान् सङ्गीतं पाठयति अपि । आवयोः रक्षणं सा एव श्रद्धया कुर्वती अस्ति'' इति ।

योगी अनेन उत्तरेण तृप्तः सन् देवम् उक्तवान् - ''पश्यतु ! भवतः चत्वारः पुत्राः । सर्वेषां पालनपोषणं भवता समानरीत्या, प्रीत्या च कृतम् । तथापि ते चत्वारः अपि चतुष्प्रकारकाः अभवन् । अस्मिन् विषये भवतः दायित्वं यावत् आसीत् तावदेव कोटिशः जनानाम् सृष्टिकर्तुः भगवतः अपि अस्ति'' इति ।

योगिनः उत्तरेण देवे तृप्तिः न सञ्जाता । तत् ज्ञात्वा सः योगी पुनः उक्तवान् - ''भवतः सन्देहानाम् उत्तरं मया विस्तरेण दीयते, शृणोतु । जीवने अनुभूयमानानां सुखदुःखानां, जयपराजयानां च अनेकानि कारणानि भवन्ति । किन्तु मानवः चिन्तयति यत् यदा श्रेयः भवति तदा तस्य कारणम् अहमेव इति । यदा पराजयः भवति तदा सः वदति - एतस्य कारणं भगवान् एव इति । किन्तु द्वयोः अपि कारणं सः एव मानवः भवति । मानवेषु स्थितान् दुष्टगुणान् भगवान् किमर्थं न दूरीकरोति इति चिन्तनमेव असाधु । सद्गुणाः दुर्गुणाः चेति सर्वेऽपि अस्माभिः आचरितानां कर्मणां फलानि । कानिचन कर्माणि सद्यः फलप्रदानि भवन्ति । कानिचन अनन्तरकाले फलानि ददति । भगवतः लीला अस्माभिः ज्ञातुम् अशक्या । तस्य विषये दोषस्य आरोपः न उचितः'' इति ।

अनेन उत्तरेण सन्तुष्टः देवः योगिनं साष्टाङ्गं नमस्कृतवान् । योगी तम् आशीर्वादवचनैः अनुगृह्य स्वस्य ध्यानमन्दिरं गतवान् ।



# रोदनं केशग्रहणाय...



लघुः राहुलः स्वस्य कुटुम्बस्य अतिकनीयान् सदस्यः । सः अतीव चटुलः आसीत् । एकस्मिन् सायङ्काले सः अनवरतं रोदनम् आरब्धवान् । एतेन तस्य पितरौ खिन्नौ जातौ । तौ तस्य रोदनस्य स्थगने अशक्तौ अभवताम् । तौ तस्य दुःखस्य कारणमपि न ज्ञातवन्तौ । तस्य मनस्स्थितेः परिवर्तनार्थं तौ बहुधा प्रयत्नं कृतवन्तौ । राहुलस्य पिता तस्मै चाकलेहं दत्त्वा तस्य विचार-परिवर्तनार्थं प्रयत्नं कृतवान् । राहुलः चाकलेहं खादित्वा पुनः रोदनम् आरब्धवान् ।

राहुलस्य माता तस्मै तदीयप्रियपाञ्चालिकां दत्तवती । परन्तु सः इतोऽपि उच्चैः रोदनम् आरब्धवान् । तस्य पितामही आगत्य तस्मै तीर्थं दत्त्वा ललाटे चन्दनं लेपयित्वा मन्त्रोच्चारणं कृतवती । परन्तु राहुलस्य रोदनं तु न स्थगितम् ।

तस्य रोदनं श्रुतवन्तः प्रतिवेशिनः एकैकशः आगत्य राहुलस्य रोदनस्थगनाय एकैकम् उपायं सूचितवन्तः । तावता राहुलस्य ज्येष्ठाग्रजः सलिलः गृहपाठतः प्रत्यागतः । गृहस्य पुरतः जातं जनसम्मर्दं दृष्ट्वा सः आश्चर्यचकितः अभवत् ।

रुदन्तम् अनुजम् अवलोकितवान् सः ज्ञातवान् यत् सः स्वच्छायां दृष्ट्वा रुदन् अस्ति इति । सलिलः अवगतवान् यत् सः स्वच्छायायाः केशगुच्छं ग्रहीतुं प्रयतमानः अस्ति इति । सः छायां प्रति यदा चलति तदा छाया अपि अग्रे धावति स्म । तस्मात् सः रुदन् आसीत् । सलिलः राहुलस्य हस्तं तस्य केशस्य उपरि स्थापितवान् । तदा राहुलः उच्चैः हसितवान् । यतः छायायां केशः गृहीतः दृश्यते स्म । सर्वे अपि सलिलस्य समयप्रज्ञां श्लाघितवन्तः ।

# कालोऽयं विनोदस्य

अधोनिर्दिष्टयोः चित्रयोः अष्ट भेदाः सन्ति । तान् अभिजानन्तु भवन्तः ।

1





## 2

मां वर्णेन रञ्जयन्तु ।
रमणीयतया वर्णलेपनं
कुर्वन्तु ।



अहो , मकराः
बहवः । एतेषु दीर्घतमः
कः इति किं भवन्तः
वक्तुं शक्नुयुः ?

## 3

(उत्तराणि ६६ तमे पृष्ठे)






# चित्रशीर्षिकास्पर्धा


Soura


Soura

**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

**समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया –**
**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु – ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ ततः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यन्ते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## पुरस्कृतशीर्षिका





लोकाय कार्यमिदम् ।
मोदाय क्रीडनमिदम् ।

## अभिनन्दनानि

**'जून्'मासस्य चित्रशीर्षिकाप्रेषकः –**
**आर्. कण्णन् (हिन्दीशिक्षकः)**
*पचाशेपाद्विद्यालयः, २९,*
*अलगिरिसामि सालै, के.के.नगरम्*
**चेन्नै – ६०० ०७८**

**मनोविनोदस्य उत्तराणि – (पृ. ६४,६५)**

१. १. शृगालस्य पुच्छस्य आकारः २. कोषः ३. पुच्छसमीपे शिलाखण्डाः ४. शलभस्य युतकम् ५. दक्षिणभागे पत्राणि ६. वृक्षखण्डे स्थिताः रेखाः ७. शृगालशलभयोः मध्ये स्थिताः शिलाखण्डाः ८. वामभागे पत्राणि ।

२. चित्रे पञ्च मकराः सन्ति । तेषु 'डि'नामकः मकरः दीर्घतमः ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

